# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




१८ वर्षे, १-२ अङ्कौ

संवत् २०२०

प्रकाशनतिथिः

शिवरात्रिः, संवत् २०२०

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

सम्पादकः

श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः ।




१८ वर्षे, १-२ अङ्कौ

संवत् २०२०

# विषयानुक्रमणिका





# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१८ वर्षः } भाद्रपूर्णिमा, संवत् २०२० { १-२ अङ्कौ

# शैवद्वैतदर्शनम्

डॉ० कान्तिचन्द्रपाण्डेयः, लक्ष्मणपुरम् ।

महनीया उपकुलपतिमहाभागा उपस्थिताश्च विद्वद्वरेण्याः !

महानयमनुग्रहस्तत्रभवतां वाराणसेयसंस्कृतविश्वविद्यालयाधिकारिणां विशेषतो विद्वन्मूर्धन्यानामुपकुलपतिमहोदयानां यदहमेतद्विश्वविद्यालयीयडा० गङ्गानाथझाव्याख्यानमालायां ग्रथ्यमानायामेषमस्त्ये ग्रथनकाले प्रसूनत्रयं ग्रथितुमादिष्टः । माननीयधुरन्धरविद्वद्भिः श्रीगिरिधरशर्मसातकडिमुखोपाध्यायप्रभृतिभिः सुगृहीतनामधेयैः प्रोम्भितसुन्दरपुष्पसदृशानि कथमपि मदीयकुसुमानि न शक्नुवन्ति भवितुमिति सम्यग् जानन्नपि "एकोऽपि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति नीत्या न लक्षिष्यते दुर्दुरूटत्वं मद्व्याख्यानानाम्, यद्वा "प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम्" इति कथनानुसारं मलीमसत्वमेवैषां सुन्दरव्याख्यानमालासौन्दर्यमधिकयिष्यतीति मन्वानो भवदादेशानुसारं शैवागमाश्रितानि द्वैत-द्वैताद्वैत-अद्वैतदर्शनानि क्रमशो यथावसरं व्याख्यातुं बद्धपरिकरः शैवद्वैतं व्याख्यातुं समुपस्थितोऽस्म्यत्र भवतां पुरस्तात् ।

एतद्व्याख्यानवक्तव्यं विचारयतो मम एतद्विश्वविद्यालयीयागमविभागाध्यक्षेण सह महता सौभाग्येन संपर्कः सञ्जातः । छात्रोपकारनिरतैस्तैरिमानि छात्रोपकारकाणि दार्शनिकतत्त्वप्रदर्शनप्रधानानि स्युरितीयमिच्छा प्रकटिता । अतस्तदनुसारं शैवदार्शनिकसाहित्यस्याधु-

निकदृष्ट्यात्यावश्यकस्येतिहासांशस्य च सिंहावलोकनमात्रं विधाय दार्शनिकांशो यथासमयं यावच्छक्यं व्याकरिष्यते ।

## द्वैतशैवदर्शनेतिहासः

सर्वाण्यपि शैवदर्शनान्यागमप्रामाण्यं स्वीकुर्वन्ति, शैवागमपरम्परासत्ताकालविषये चैतद्विश्वविद्यालयीयागमदर्शनपरिषदध्यक्षीयभाषणं ददता मया निवेदितमेव—"आगमपरम्परासत्तासमयनिर्णये चिकीर्षिते भूखननोपलब्धस्य प्रागैतिहासिकसंस्कृतिसूचकस्य वस्तुजातस्योपरि दृष्टिप्रक्षेपे कृते एवं निश्चयो जायते यच्छैवागमपरम्परायाः सत्ता अस्मात् कालात् पञ्चसहस्रवर्षपूर्वं 'हरप्पा-मोहेञ्जोदारो'संस्कृतीनां समय आसीत्" इत्यादि ।

## ईशवीयसंवत्सरारम्भात् पूर्वं शैवद्वैतप्रचारः

अतोऽधुनेदमेव वक्तव्यं यत् सोमानन्दाभिनवगुप्तादिकाश्मीरदार्शनिकानुसारं वेदवच्छैवागमा अप्यैश्वर्यो वाचः, एवं चानादयः । एषां सत्ता सत्य-त्रेता-द्वापराख्येषु पूर्वयुगेष्वप्यासीत् । स्वच्छन्द-लाकुल-बलि-राम-लक्ष्मण-रावणादिभिरन्यैर्ऋषिभिश्चेमे सम्यगधीताः । परं कालगत्यैषां ह्रासः सञ्जातः, कलिप्रारम्भे च ऋषिषु 'दुर्गमगोचर'कलापि'ग्रामप्रमुखं प्रयातेषु समुच्छिन्ना आगमपरम्परा ।

ततश्चैकदा भगवाञ्छिवः श्रीकण्ठरूपेण कैलाशाद्रौ भ्रमन् मर्त्यानुग्रहायोर्ध्वरेतसं मुनिं दुर्वाससं जगतीतले शैवागमं प्रकाशयितुमादिशत् । भगवदादेशानुसारं स त्र्यम्बकादित्यनामकमेकं मानसं पुत्रं ससर्ज, तस्मिंश्च शैवागमरहस्यानि संक्रमयामास । सोऽपि त्र्यम्बकाख्यं मानसं पुत्रं सृष्ट्वा शैवागमांश्चाध्याप्य सिद्धो भूत्वा खमुत्पपात । एवमेव परम्परया मनःसृष्टैश्चतुर्दशभिः पुत्रैः समनुष्ठितम्, यतस्ते सर्वेऽप्यन्तर्मुखाः समभूवन् । परं पञ्चदशः पुत्रः सङ्गमादित्यनामकः कथञ्चन बहिर्मुखः सञ्जातः । स एकां रूपयौवनसौभाग्यलक्षणयुक्तां ब्राह्मणीं ब्राह्मणेन विवाहेन परिणिनाय, भ्रमंश्च काश्मीरमागतः । तस्य सुतो वर्षादित्यनामकः, तस्य च अरुणादित्यः, तस्यापि च आनन्दः, यस्य पुत्रः सोमानन्दाख्यः शिवदृष्टिनामकप्रकरणकर्ता समभूत् ।

इदं सर्वं सोमानन्दपादैः शिवदृष्ट्यन्तभागे स्वयमेवोल्लिखितम् । अत इदं स्पष्टं यत्कलावद्वैतशैवागमगुरुपरम्परायां सोमानन्द एकोनविंश आसीत् । स चाभिनवगुप्तपादानां परमेष्ठिगुरुरासीत् । अभिनवगुप्तश्च ईशवीयदशमशतकोत्तरार्धे एकादशशतकपूर्वार्धे चाभूदित्यत्र न विवादावसरः । यतस्तेन ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी-भैरवस्तव-क्रमस्तोत्राणां प्रसिद्धानां स्वग्रन्थानां

समापनतिथयः स्वयमेव लिखिताः। अत इदं निश्चीयते यत् सोमानन्द ईशवीयनवमशतक-मध्ये समभूत्।

यद्यप्याधुनिकैतिहासिकमतानुसारं प्रत्येकं परम्परागतस्य गुरोः पञ्चविंशतिवर्षपरिमिते समये स्वीकृते शैवागमप्रादुर्भाव ईशवीयचतुर्थशताब्द्यां जात इत्यायाति, तथापि शैवागमाश्रितद्वैताद्वैत-लकुलीशपाशुपतदर्शनप्रवर्तको लकुलीश ईशवीयद्वितीयशतकप्रारम्भेऽभूदिति मथुरास्तम्भलेख-सोमनाथशिलालेखाभ्यां तैरेव निश्चितम्। अतो गुर्वादिपरम्परागणनायां प्रत्येकं पञ्चविंशतिवर्षपरिमितः कालो गणनीय इत्याधुनिकैतिहासिकमतं शैवगुरुपरम्परासमयनिर्धारणे चिकीर्षिते नाश्रयणीयमिति प्रतिभाति।

अपरं च बादरायणेन स्वीयवेदान्तसूत्रे पाशुपतदर्शनं निराकृतम्। बादरायणस्य च समय ईशापूर्वचतुर्थशतके पञ्चमशतके वा स्वीक्रियते। सत्यपि मतभेदे कश्चनापि बादरायणमीशवीय-द्वितीयशतकादपरभाविनं न स्वीकरोति। अतः पाशुपताख्यद्वैतशैवदर्शनसत्ता ततः पूर्वं स्वीकर्तव्या।

अभिनवगुप्तश्च श्रीसिद्धातन्त्रमनुसरन् अद्वैत-द्वैत द्वैताद्वैतदर्शनानि यथासंख्यं त्र्यम्बक-अमर्दक-श्रीनाथैः कलौ समकालमेव प्रकाशितानीति मतं तन्त्रालोकस्य षट्त्रिंशाह्निके एषु श्लोकेषु समुपन्यस्तवान्—

> तेषां क्रमेण तन्मध्ये भ्रष्टं कालान्तराद्यदा।
> तदा श्रीकण्ठनाथाज्ञावशात् सिद्धा अवातरन्॥ ११॥
> त्र्यम्बकामर्दकाभिख्यश्रीनाथा अद्वये द्वये।
> द्वयाद्वये च निपुणाः क्रमेण शिवशासने॥१२॥ इति।

अत इदं निश्चीयते यदुपलब्धद्वैतशैवदर्शनप्रचारो भूय ईशवीयशतकप्रारम्भात् पूर्वं सञ्जात इति।

## द्वैतशैवागमाः

अद्यावधि शैवद्वैतप्रतिपादकं दर्शनद्वयमुपलब्धम्—पाशुपतदर्शनम्, सिद्धान्तशैवदर्शनञ्च। अनयोः पारस्परिको मुख्यो भेदोऽयमेव यत् प्रथमं दशागमाश्रितं द्वितीयञ्चाष्टाविंशत्यागमाश्रितम्। अष्टादशागमाः, सर्वसम्मतदशद्वैतागमभिन्ना ये सिद्धान्तशैवदार्शनिकैर्द्वैतं प्रतिपादयद्भिः प्रमाणत्वेन स्वीक्रियन्ते, तेऽभिनवगुप्तकृततन्त्रालोकानुसारं तद्व्याख्यातृजयरथानुसारञ्च न द्वैतप्रतिपादकाः, अपि तु द्वैताद्वैतप्रतिपादकाः। तन्मतञ्च श्रीश्रीकण्ठीमुपजीवति। दशद्वैततन्त्राणां नामानीत्थम्—

[1]कामज-[2]योगज-[3]चिन्त्य-[4]मौकुट-[5]अंशुमत्-[6]दीप्त-[7]कारण-[8]अजित [9]सूक्ष्म-[10]सहस्रा इति।

परन्तु मुद्रितमृगेन्द्रागमभूमिकायां द्वैतप्रतिपादकशैवागमानां शैवसंज्ञया व्यपदेशः, तन्नामानि चैवं परिगणितानि—

कामिकं योगजं वाथ तथा चिन्त्यश्च कारणम् ।
अजितं दीप्तसूक्ष्मौ च सहस्रश्च तथांशुमान् ॥
सुप्रभेदस्तथा ह्येते शैवाः सम्परिकीर्तिताः । इति ।

इदं प्रमाणवाक्यं जयरथोल्लिखितप्रमाणवाक्याद्भिन्नमिव प्रतिभाति । इह श्रीश्रीकण्ठ्युल्लिखित'कामज'स्थाने 'कामिक' इत्युपलभ्यते । इदं तु कामजस्य नामान्तरमेव, परन्तु मौकुटस्थाने भिन्नस्यागमस्य सुप्रभेदाख्यस्य सन्निवेश उपलभ्यते । तांस्तानागमानधीयानेन मया नाद्यावधि मृगेन्द्रागमभूमिकोपन्यस्तभिन्नागमसन्निवेशकारणमुपलब्धम् । कामिकापरनामकस्य कामजस्य त्रय उपभेदाः—

नारसिंहं च वक्त्रारं भैरवोत्तरमेव च ।
नारसिंहाख्यमेवैतन्मृगेन्द्रमिति कथ्यते ॥ इति । (मृ० भू० २)

एवञ्च मृगेन्द्रतन्त्रं नारसिंहापरनामकं कामिकस्योपभेदरूपत्वाद् द्वैतप्रतिपादकमिति यद्यपि सुस्पष्टं भाति, तथापि श्रीश्रीकण्ठ्याम्, यामवलम्ब्य जयरथो द्वैताद्वैतशैवागमनामान्युल्लिखति स्म, नारसिंहागमस्याष्टादशाद्वैताद्वैतागमेषु सन्निवेशः समुपलभ्यते । इदं द्वैतशैवसिद्धान्तदर्शनसाहित्यप्रदर्शनावसरे तन्नामनिर्देशे क्रियमाणे स्पष्टीभविष्यति ।

एवमेव मुद्रितस्य मतङ्गपारमेश्वरागमस्य, यस्य श्रीकण्ठ्यां पारमेश्वर इति नाम्ना द्वैताद्वैतागमेषूपन्यासः, तस्योपरि काश्मीरिकरामकण्ठकृता द्वैतानुसारिणी व्याख्या दृष्टा श्रुता वा 'काश्मीर शैविज्म' इत्याख्यग्रन्थकर्तृभिः श्रीजगदीशचन्द्रचटर्जीमहोदयैरिति प्रतिभाति, मतङ्गटीकायाः सप्रश्नचिह्नं रामकण्ठकृतिषु तेन परिगणनात् । अत इदं प्रतिभाति यद् यथा वेदवाक्यान्युपनिषद्वाक्यानि च भिन्नैर्वैदिकदार्शनिकैर्द्वैत-द्वैताद्वैत-विशिष्टाद्वैत-अद्वैतमतानि प्रतिपादयद्भिः स्वस्वमतानुसारं व्याख्यातानि, तथा शैवागमा अपि तैस्तैः शैवदार्शनिकैः स्वस्वमतपरिपोषकतया व्याख्याताः । एतच्चाद्वैतदृष्ट्या स्वच्छन्दतन्त्रटीकाकृतः क्षेमराजस्य वाक्यात् सुस्पष्टम् । यतः स स्पष्टं कथयति यत् स्वच्छन्दतन्त्रस्य द्वैतदृष्ट्या व्याख्यानं यत्पूर्वैः कृतं तन्नामविरुद्धमित्यसङ्गतम् । यथाह—

## शैवद्वैतदर्शनम्

नाम्नैव भेददृष्टिर्विधुता येनास्वतन्त्रता तत्त्वा ।
श्रीमत्स्वतन्त्रतन्त्रं भेदव्याख्यां न तत्सहते ॥ इति ।
( स्व० तं०, भा० ६, प०१२, पृ० १४६ )

पूर्वोक्तविवेचनादिदं स्पष्टीभवति यद् यद्यपि अभिनवगुप्तपादैर्निर्दिष्टानां दशागमानां द्वैतप्रतिपादकत्वं प्रायः श्रीश्रीकण्ठ्यनुसारं स्वीकृतम्, तथाप्येतद्विषये मतभेदो वर्तते, द्वैताद्वैतप्रतिपादकत्वेनाभिनवगुप्तस्वीकृतानामागमानां सिद्धान्तशैवैः द्वैतप्रतिपादकत्वेन स्वीकरणात्, नारसिंहापरनामकस्य मृगेन्द्रागमस्य च श्रीश्रीकण्ठ्यां द्वैताद्वैतप्रतिपादकाष्टादशागमेषूल्लिखितस्यापि काश्मीरिकनारायणकण्ठेन द्वैतपरतया व्याख्यानाच्च ।

### द्वैतपाशुपतदर्शनविवरणस्य दुष्करत्वम्

पाशुपताख्यद्वैतशैवदर्शनप्रतिपादक आगमाश्रितः कोऽपि ग्रन्थो नाद्यावध्युपलब्धः । आगमा अपि सम्पूर्णा मुद्रिता हस्तलिखिता वा नोपलभ्यन्ते, विशेषतस्तेषां विद्यापादाः, यत्रागमेषु दार्शनिकप्रक्रियाः प्रदीयन्ते । अतः पाशुपताख्यद्वैतशैवदर्शनस्य दार्शनिकतत्त्वविवरणमतीव-दुष्करमपि बादरायणीयब्रह्मसूत्रे तट्टीकासु च खण्डनार्थमुपन्यस्तं तथा हरिभद्रसूरिराजशेखरकृत्योः षड्दर्शनसमुच्चयनाम्न्योः संक्षेपेण प्रतिपादितं तन्मतमाश्रित्य यावच्छक्यं करोमि ।

### पाशुपतमतखण्डनपरं ब्रह्मसूत्रपत्यधिकरणम्

बादरायणीयब्रह्मसूत्रद्वितीयाध्यायद्वितीयपादस्थं सप्तममधिकरणं पत्यधिकरणमिति शाङ्करवेदान्तिषु प्रसिद्धम् । परन्तु विशिष्टाद्वैतदृष्ट्या श्रीकण्ठेन कृते ब्रह्मसूत्रभाष्ये तत् पाशुपताधिकरणमिति निर्दिष्टम् । केचन शाङ्करवेदान्तिनो मन्यन्ते यत् पत्यधिकरणे निराकृतं दर्शनं लकुलीशपाशुपतदर्शनमिति । यतः शङ्कराचार्येण "पत्युरसामञ्जस्यात्" इति सूत्रटीकायां लकुलीशपाशुपतदर्शनस्वीकृताः कारणकार्ययोगविधिदुःखान्ताः पञ्च पदार्थाः समुपन्यस्ताः, परन्त्वयं तेषां भ्रम एव । यतः शङ्कराचार्यस्तदनन्तरं स्वयमेव कथयति यन्निराक्रियमाणं दर्शनं द्वैतदर्शनम्, यस्मिन् 'अप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वरः' । माहेश्वरदर्शनविषये च स्पष्टमुल्लिखति—"माहेश्वरास्तु मन्यन्ते कारणकार्ययोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः । पशुपतिरीश्वरो निमित्तकारणमिति वर्णयन्ति" इति । अस्य शाङ्करभाष्यांशस्य व्याख्यां कुर्वता वाचस्पतिमिश्रेण भामत्यां निराक्रियमाणदर्शनस्य द्वैतत्वमेवं साधितम्—

"चत्वारो माहेश्वराः—शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्च । चत्वारोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायित्वान्माहेश्वराः.........एष तेषामभिसन्धिः—

चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणत्वमात्रं न तूपादानत्वमपि। तस्मादिहापीश्वरो जगत्कारणं निमित्तमेव न तूपादानमपि, एकस्याधिष्ठातृत्वाधिष्ठेयत्व-विरोधात्" इति ।

अतो निमित्तोपादानकारणयोः पारस्परिकभेदस्वीकारादिदं दर्शनं न्यायवैशेषिकवद् द्वैत-दर्शनमेवेत्यत्र सन्देहलेशोऽपि नास्ति । इदमस्मन्मतं श्रीकण्ठभाष्येणापि समर्थ्यते, यत्रास्याधिकर-णस्य नाम 'पाशुपताधिकरणम्', न तु 'लकुलीशपाशुपताधिकरणम्' इत्युपन्यस्तम् ।

शङ्कराचार्यव्याख्यानुसारं बादरायणनिराक्रियमाणं दर्शनं न लकुलीशपाशुपतदर्शनमिति लकुलीशकृतपाशुपतसूत्रोपरि दृष्टिपाते क्रियमाणे सुस्पष्टीभवति । यतो लकुलीशपाशुपतदर्शनं न द्वैतदर्शनमपि तु द्वैताद्वैतदर्शनम् । द्वैताद्वैतत्वं चास्य "भवोद्भवः", "कलितासनम्" इति सूत्रयोः कौण्डिन्यकृतव्याख्यायामेवं साधितम्—

विद्याकलापशुरूपं कार्यमिह भवशब्दनिर्दिष्टं कारणरूपात् पत्युरेवोद्भवतीति स भवोद्भवः। एवञ्च न निमित्तकारणाद्भिन्नं समवायिकारणं कुम्भकारान्मृदिव स्वीक्रियतेऽनेन दर्शनेन । प्रत्युत कारणरूपः पतिः कार्यजातस्यासनरूपत्वेनाभ्युपगम्यते । कार्यत्रयस्य सत्ता पतिशक्तौ स्वीक्रियते, शक्तिश्चैतन्मते सामर्थ्यमैश्वर्यं स्वगुणः सद्भावः सतत्त्वं तत्त्वधर्मः, अन्ययोऽमृतो भगवान् कामतः स्वशक्तिस्थं कार्यं स्वशक्त्याऽध्यास्ते, सर्वमपि कार्यजातं पत्यौ नभसि नक्षत्रजातमिव तिष्ठति ।

अपरञ्च पाशुपत-लकुलीशपाशुपतयोर्मोक्षस्वरूपे भेदः । पूर्वमते सर्वेषां दुःखानामन्त एव मोक्षः, अपरमते न केवलं दुःखान्तः, अपि तु पारमैश्वर्यावाप्तिर्मोक्षः । इदं सर्वं द्वैताद्वैतशैव-विषयकद्वितीयव्याख्याने स्पष्टतरं करिष्यते ।

षड्दर्शनसमुच्चयकर्ता हरिभद्रसूरिः परस्परतो भिन्नानां परःशतं दर्शनानां सत्तां स्वीकुर्वन्नपि दर्शनानि धर्मोद्भवानीति मन्यमानो धर्म-मोक्षोपाय-मोक्षस्वरूप-दार्शनिकतत्त्वाद्याश्रयेण दर्शन-विभागं कुर्वाणः षडेव भारतीयदर्शनानि बौद्ध-नैयायिक-सांख्य-जैन-वैशेषिक-जैमिनीयाख्यानि प्रधानानीति मनुते, कथयति च यन्न्यायवैशेषिकदर्शनप्रवर्तयितारौ शैवावास्ताम्, मोक्षश्च तयोर्मते दुःखान्तस्वरूपः । तट्टीकाकारो मणिभद्रसूरिश्चाभिदधाति यत्तयोर्मते सृष्टिकारणमीश्वरः शिवो वा केवलं निमित्तकारणम् ।

राजशेखरश्च स्वीयषड्दर्शनसमुच्चये तान्येव दर्शनानि प्रतिपादयन् न्यायदर्शनञ्च यौगनाम्ना समुल्लिखन्,शैवधर्मानुयायिनां शैवदार्शनिकानां वेषाचारगुरुपरम्परादिकमेवं वर्णयति—

## शैवद्वैतदर्शनम्

अथ यौगमतं ब्रूमः शैवमित्यपराभिधम् ।
ते दण्डधारिणः प्रौढकौपीनपरिधायिनः ॥
कम्बलिकाप्रावरणा जटापटलशालिनः ।
अक्षपादो गुरुस्तेषां तेन ते ह्याक्षपादिकाः ॥ इत्यादि ।

एषां शैवानां चत्वारो भेदा हरिभद्रसूरिणैवं समुल्लिखिताः—

शैवाः पाशुपताश्चैव महाव्रतधरास्तथा ।
तुर्याः कालमुखा मुख्या भेदा एते तपस्विनाम् ॥ इति ।

गोविन्दानन्दश्च रत्नप्रभाख्यशाङ्करभाष्यव्याख्यायां पत्यधिकरणे निराक्रियमाणदर्शनपरिचयमित्थं ददाति—"लुञ्चितकेशमतनिरसनानन्तरं जटाधारिशैवमतं निराक्रियत इति प्रसङ्गसङ्गतिमाह—इदानीमिति" इति ।

अतः शाङ्करभाष्ये जटाधारिशैवमतनिराकरणस्य रत्नप्रभायां स्वीकृतत्वात्, हरिभद्रसूरिणा जटाधारिणां पाशुपतत्वेनाभ्युपगम्यमानत्वात्, उल्लिखितबहुग्रन्थकर्तृमतानुसारं पाशुपतैः शिवस्य निमित्तकारणत्वमात्रप्रतिपादनात्, मोक्षस्य दुःखान्तस्वरूपत्वावधारणाच्च न भ्रमितव्यं यत्पत्यधिकरणे लकुलीशपाशुपतदर्शननिराकरणमिति ।

द्वैतपाशुपतदर्शनप्रतिपादकः कोऽपि स्वतन्त्रो ग्रन्थो नास्माभिरद्यावध्युपलब्धः । अतः केवलमेतावदेव शक्यतेऽस्य विषये वक्तुं यदस्मिन् दर्शने कारण-कार्य-योग-विधि-दुःखान्तरूपाः पञ्च-पदार्थाः, ये पाशुपतदर्शनोत्थानानन्तरभाविना लकुलीशपाशुपतनामकद्वैताद्वैतशैवदर्शनप्रवर्तकेन लकुलीशेनापि स्वीकृताः, ईश्वरः पतिर्वा निमित्तकारणम्, दुःखान्त एव च मोक्ष इत्यभ्युपगतम् । पदार्थानां स्वरूपविषये न किमपि सप्रमाणं शक्यते वक्तुम् ।

## द्वैतशैवसिद्धान्तदर्शनम्

द्वैतशैवसिद्धान्तविषयकं विपुलं साहित्यमुपलभ्यत इति तस्य सविस्तरं व्याख्यानं सुशकम् । अस्य दर्शनस्य आधारभूता अष्टाविंशत्यागमाः । तेषु दश कामिकादयः पूर्वोपन्यस्ता द्वैतशैव-साधारणाः । अपरेऽष्टादश, येऽभिनवगुप्तपादैर्द्वैताद्वैतप्रतिपादकत्वेनोपन्यस्तास्ते शैवसिद्धान्तदार्शनिकैर्द्वैतपरत्वेन स्वीकृता व्याख्याताश्च, तेषां नामानीत्थम्—[1]विजय-[2]निश्वास-[3]मद्गीत-[4]पारमेश्वर-[5]मुखबिम्ब-[6]सिद्ध-[7]सन्तान-[8]नारसिंह-[9]चन्द्रांशु-[10]वीरभद्र-[11]आग्नेय-[12]स्वायम्भुव-[13]विसर-[14]रौरव-[15]विमल-[16]किरण-[17]ललित-[18]सौरभेया इति ।

अस्य प्रचारो दक्षिणभारते तेषु तेषु द्वैतशैवमठेषु केषुचन गृहेषु चाद्यापि वर्तत इत्यस्माभिर्दक्षिणभारते शैवागमसंग्रहं कर्तुं भ्रममाणैः प्रत्यक्षीकृतम्। ईशवीयनवमशतकादारभ्य द्वादशशतकपर्यन्तं चास्य प्रसारः काश्मीरे, चोले, लाटे, मध्यप्रदेशे, कान्यकुब्जे चासीदिति नातिदूरे तत्तद्देशजातद्वैतसिद्धान्तशैवव्याख्यातृनामोपन्यासपुरःसरं तत्कृतिवर्णनावसरे स्पष्टीकरिष्यामः। अस्य परम्परा च रौरवागमद्रष्टू रुरोः समयादारभ्य आत्रेयादिद्वारा मोक्षकारिकाकर्तृसद्योज्योतिपर्यन्तमविच्छिन्ना आसीदिति मोक्षकारिकातट्टीकाकारवचनाभ्यामवगम्यते। यथाहतुः—

शिवात् परम्परायातौ भोगमोक्षौ ससाधनौ।
आत्रेयाय मुनीन्द्रेण रुरुणा संप्रकाशितौ॥
मन्दबुद्धिप्रबोधाय करुणाविष्टधीः स्फुटम्।
सद्योज्योतिस्तु संक्षेपात्तावेतौ परिबद्धवान्॥
यं चानुशासयामास भगवानीशसम्मतः।
उग्रज्योतिर्गुरुः श्रीमान् सर्वविद्यासरित्पतिः॥ इति,

"गुर्वाम्नायतोऽविच्छिन्नस्मरणसन्ततेरेव पारमेश्वरत्वेनैतत्प्रतीयते" इति च।

(मो० का० ६२-३)

## शैवसिद्धान्तप्रतिपादकाष्टाविंशत्यागमटीकाकाराः सैद्धान्तिकनिबन्धलेखकाश्च

**१. सद्योज्योतिः**

सद्योज्योतिः खेटपाल-खेटकनन्दनेत्यपरनामद्वयेन प्रसिद्धो द्वैतशैवसिद्धान्तप्रतिपादकत्वेनाभिनवगुप्तपादैस्तन्त्रालोके मलस्य द्रव्यत्वनिराकरणे प्रत्यभिज्ञासम्मतषट्त्रिंशत्तत्त्वप्रतिपादने चोद्धृतः। अतः स ईशनवमशतके समभूदिति प्रतीयते। एतल्लिखिता इमे ग्रन्थाः—

१. रौरवागमटीका, २. स्वायम्भुवागमटीका, ३. तत्त्वत्रयनिर्णयः, ४. भोगकारिका, ५. मोक्षकारिका, ६. तत्त्वसंग्रहः, ७. परमोक्षनिरासकारिका च।

अनेन सर्वतः प्रथमं रौरवागमप्रतिपादितशैवदर्शनार्थं 'सिद्धान्त'शब्दः प्रयुक्तः। यथाह—

रुरुसिद्धान्तसंसिद्धौ भोगमौक्षौ ससाधनौ।
वच्मि साधकबोधाय लेशतो युक्तिसंस्कृतौ॥ इति। (मो० का० ७९)

तदनन्तरं श्रीकण्ठकृतरत्नत्रयटीकाकारश्रीमदघोरशिवाचार्यवचनानुसारं 'सिद्धान्त'शब्दः पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु दशाष्टादशसु तन्त्रेषु प्रसिद्धिं गतः। (र० त्र० ५)

२. बृहस्पतिः

बृहस्पतिः सद्योज्योतिसमकालिक आसीदिति प्रतीयते, तन्त्रालोके प्रथमाष्टमनवमाह्निकेषु तन्मतप्रतिक्षेपात्, अघोरशिवाचार्येण मोक्षकारिकाटीकायां द्वयोरपि सममुपन्यासाच्च। यथाह—

याभ्यां प्रकाशितं वर्त्म सिद्धान्ते सिद्धभावतः।
गुरूणामपि तौ वन्द्यौ सद्योज्योतिबृहस्पती॥ इति।

(मो० का० १)

एकैवास्य कृतिः शिवतनुशास्त्राभिधाऽद्यावधि तन्त्रालोकवाक्यमात्राज्ज्ञायते।

३-४. शङ्करनन्दनदेवबलौ

शङ्करनन्दनदेवबल्योर्मते प्रत्याख्येयत्वेन निर्दिष्टे जयरथेन स्वीयतन्त्रालोकटीकायाम्, अतो ज्ञायते यदिमावपि द्वैतशैवावास्ताम्। यथाह —

सद्योज्योति-देवबल-शङ्करनन्दन-कणभुगादिमतम्।
प्रत्याख्यास्यन्नवममाह्निकं व्याचख्यौ जयरथः॥ इति।

देवबलस्य काऽपि कृतिः केनाप्यन्येनोल्लिखितत्वेनापि न ज्ञायते। परन्त्वाचार्याभिनवगुप्त ईश्वरप्रत्यभिज्ञाविमर्शिन्यां शङ्करनन्दनकृतिं प्रज्ञालङ्कारनाम्नीं संकेतयति परमाणुवादनिरसनावसरे (भा०, भा० १,२२५), कथयति च यत्परमाणुवादनिरासः शङ्करनन्देन सविस्तरं प्रज्ञालङ्कारे कृतः। जानीमो वयं यत् शैवाद्वैतवादिनः शैवद्वैतवादिनश्च परमाणुवादं खण्डयित्वा मायावादं स्थापयन्ति स्म। अत इदं प्रतिभाति यत्प्रज्ञालङ्कारे शङ्करनन्दनः परमाणुवादं निरस्य मायावादं स्थापितवानिति। अयमप्यभिनवगुप्तेनास्य मतस्योल्लिख्यमानत्वात् तत्पूर्वभावी ईशवीयनवमशतकभवः प्रतिभाति।

## काश्मीरे द्वैतशैवसिद्धान्तः

सद्योज्योतिमहाभागस्य महान्तोऽनुयायिनः काश्मीरे समभूवन्निति स्पष्टीभवति तन्निर्मित-मोक्षकारिकाया उपरि काश्मीरिकद्वितीयरामकण्ठकृतायाष्टीकाया दर्शनेन। तत्र चेदं पद्यमस्ति टीकान्ते—

इति मोक्षकारिकायां नारायणकण्ठसूनुना रचिता।
संक्षेपाद् वृत्तिरियं शिष्यहिता भट्टरामकण्ठेन॥ इति।

२ ९

द्वितीयो रामकण्ठः काश्मीरिक आसीदिति नादकारिकान्ते तद्वचनादेवावगम्यते, यथाह—

इति नादसिद्धिमेनामकरोच्छ्रीरामकण्ठोऽत्र ।
नारायणकण्ठसुतः काश्मीरे वृत्तपञ्चविंशत्या ॥ इति ।

अद्वैतशैवदर्शनव्याख्यातारः सोमानन्दकल्लटोत्पलदेवलक्ष्मणगुप्ताभिनवगुप्तक्षेमराजादयः सुप्रसिद्धाः । द्वैतशैवसिद्धान्तप्रतिपादकौ काश्मीरिकावेकवंशजातौ द्वौ रामकण्ठावास्तामिति नातिदूरे साधयिष्यते ।

प्रथमो रामकण्ठो न केवलमद्वैतप्रतिपादिकायाः स्पन्दकारिकायाष्टीकां व्यदधादपि तु सद्वृत्तिनामकमपरमपि द्वैतपरं ग्रन्थं व्यलिखत्, यस्यानुकरणं श्रीकण्ठः स्वीयरत्नत्रयेऽकरोदिति तद्ग्रन्थसमाप्त्युपलभ्यमानाद्वाक्यद्वयात् स्पष्टीभवति । यथाह—

"कृतिः श्रीमदुत्पलदेवपादपद्मोपजीविनः । श्रीमद्राजानकरामकण्ठस्य" इति ।

श्रीरामकण्ठसद्वृत्तिं मयैवमनुकुर्वता ।
रत्नत्रयपरीक्षेयं कृता श्रीकण्ठसूरिणा ॥ इति च ।

अयं प्रथमो रामकण्ठो मृगेन्द्रतन्त्रवृत्तिकर्त्रा नारायणकण्ठेन स्वद्वैतगुरुपरम्परामुल्लिखता इत्थं वर्णितः—

साक्षाच्छ्रीकण्ठनाथादिव सुकृतिजनानुग्रहायावतीर्णा-
च्छ्रुत्वा श्रीरामकण्ठाच्छिवमतकमलोन्मीलनप्रौढभास्वान् । ( मृ० वृ० ४ )

अत इदं स्पष्टं यत् काश्मीरे द्वैतशैवसिद्धान्तप्रतिपादकाः क्रमेणैवमभूवन्—

रामकण्ठः प्रथमः ।
श्रीकण्ठः रत्नत्रयकर्ता ।
नारायणकण्ठो विद्याकण्ठद्वारा प्रथमरामकण्ठप्रशिष्यो मृगेन्द्रवृत्तिकारः ।
रामकण्ठो द्वितीयो नारायणकण्ठसुतः ।

अनेन बहूनां सिद्धान्तागमानामुपरि टीका लिखिताः । तासु मतङ्गागमटीका हस्तलिखिता कलिकातास्थराजकीयसंस्कृतविद्यालयेऽद्यापि समुपलभ्यते ।

तत्पूर्वभाविभिराचार्यैरर्थतत्त्वसमीक्षाऽद्वैतदृष्ट्या द्वैतदृष्ट्या च कृता आसीत् । हेलाराजः, यो वाक्यपदीयतृतीयकाण्डटीकावसाने आत्मानं काश्मीरराजमुक्तापीड( ७२३ ई० )मन्त्रि-

लक्ष्मणवंशजत्वेन भूतिराजतनयत्वेन चोल्लिखति, भूतिराजश्चाभिनवगुप्तपादगुरुरासीदिति ईशवीय-दशमशताब्द्यां समभूत्—सोऽर्थतत्त्वमद्वैतदृष्ट्या प्रत्यपादयत्। श्रीकण्ठश्च रत्नत्रये द्वैतदृष्ट्या तद्विवेचनमकरोत्। द्वैतदृष्टिमनुसरता द्वितीयेन रामकण्ठेन स्वीयनादकारिकायां सिद्धान्तशैवमतानुसारं स्फोटवादः समालोचितः। पुरा सद्योज्योतिः मोक्षकारिका-परमोक्षनिरासकारिकेतिप्रसिद्धकृतिद्वये परदर्शनसम्मतमोक्षस्वरूपखण्डनमकरोत्। द्वितीयो रामकण्ठः स्वकृततट्टीकयोः–( १ ) उत्पत्ति-समतापक्षम्, यदनुसारं सर्वज्ञत्वं सर्वशक्तिमत्त्वं च जीवे न नैसर्गिके, अपि तु मोक्षे उत्पद्येते; (२) लकुलीशपाशुपतीयं समतासंक्रान्तिपक्षम्, यदनुसारं कस्तूरीगन्धो वस्त्रमिव सर्वज्ञत्वसर्वशक्तिमत्त्वे शिवान्मुक्ते संक्रामतः; ( ३ ) आवेशपक्षम्, यदनुसारं स्वस्थानस्थो ग्रहः पुरुषविशेषमिव शिवस्थे सर्वज्ञत्वसर्वकर्तृत्वे मुक्तमाविशत इति मतत्रयं निरस्य चतुर्थमभिव्यक्तिपक्षमस्थापयत्, यदनुसारं जीवे स्वाभाविके सर्वज्ञत्वसर्वकर्तृत्वे मलतिरोहिते व्यपगतमले मुक्तेऽभिव्यक्तीभवतः। अस्यान्यत् कृतिद्वयं (१) मन्त्रविवेकटीका, (२) आगमविवेक इतिनामकं मोक्षकारिका( पृ० ४ )-परमोक्षनिरासकारिका( पृ० ४९ )समुद्धरणाभ्यामेव ज्ञायते।

## मध्यप्रदेशे गुर्जरप्रदेशे च शैवसिद्धान्तप्रचारः

धारानगरीभवो राजा भोजः ( १०१८-६०ई० ) योऽलङ्कारशास्त्रवास्तुशास्त्रयोः प्रतिपादकत्वेन सर्वसम्मतः, सः स्वलेखनीं द्वैतसिद्धान्तशैवमतप्रतिपादनायाप्युपयुनक्ति स्मेति तदीयात् तत्त्वप्रकाशिकेति नाम्नो ग्रन्थादवगम्यते। तत्त्वप्रकाशिकाटीकाकर्तुरघोरशिवस्य वचनादस्या उपरि कैश्चन सिद्धान्तशैवरहस्यमजानानैरद्वैतदृष्ट्या टीकाः कृता आसन्निति बुध्यते। यथाह—

अद्वैतवासनाविष्टैः सिद्धान्तज्ञानवर्जितैः।
व्याख्यातोऽत्रान्यथान्यैर्यत् स ततोऽस्माकमुद्यमः॥

( त० प्र० १ )

इयं विद्यारण्ययतीन्द्रेण स्वसूतसंहिताटीकायां प्रमाणत्वेनोपन्यस्ता। अस्यां षट्त्रिंशत्तत्त्वानि स्वीक्रियन्ते, शक्तेः शिवे समवायसम्बन्धेन विद्यमानताभ्युपगम्यते। शिवश्च तत्त्वातीतो गीयते।

अघोरशिवकृतपद्धतिवाक्यादिदमवगम्यते यद् भोजराजस्य गुरुर्गुर्जरदेशदक्षिणभागलाटस्थकल्याणनगरीवासिन उत्तुङ्गशिवस्य कनीयान् भ्राता आसीदिति, यथाह—

ततोऽभूल्लाट उत्तुङ्गशिवो विन्ध्ये यतीश्वरः ।
कल्याणनगरीवासी गुरुः पद्धतिकृत् सुधीः ॥
सर्वविद्याधिपो यस्य कनीयानार्यदेशजः ।
सर्वागमार्थनिर्णेतुः श्रीभोजनृपतेर्गुरुः ॥ इति ।

## द्वैतसिद्धान्तशैवदर्शनप्रचारो दक्षिणभारते

अघोरशिवाचार्यो द्वैतसिद्धान्तशैवदर्शनप्रतिपादकानां बहूनां ग्रन्थानामुपरि टीका लिखितवान् । स च चोलदेशीयकुण्डिनकुलवास्तव्यः स्वीयां 'पद्धतिम्' अष्टपञ्चाशदधिकैकादशशततमे ईशवीयसंवत्सरे समापितवानिति बुध्यते पद्धतिसमाप्तावुल्लिखितात्तद्वचनात् , यथाह—

"नादज्ञेये शकस्याब्दे वर्तमाने कलौ युगे" इत्यादि ।

तत्त्वत्रयनिर्णयटीकान्ते समुपलब्धश्लोकाच्च तत्स्थाननिर्णयः । यथाह—

श्रीमदघोरशिवाह्वयेन गुरुणा श्रीजन्यया व्याख्यया
लोकेऽपि प्रथितेन कुण्डिनकुलं चोलेष्वलङ्कुर्वता ॥ इति ।

( त० त्र० नि० टी० २२ )

स च लक्षद्वयशिष्याध्यापक आसीदिति स्वयं तत्त्वप्रकाशिकादिटीकासमाप्तिषूद्घोषयति ।

अयं न केवलं महान् टीकाकारः स्वकाले च द्वैतसिद्धान्तशैवदर्शनप्रतिपादकानामग्रेसरः, अपि तु महान् कविर्नाटकलेखकश्चासीत् । इमास्तत्कृतयः—

काव्यानि—[1]आश्चर्यसारः, [2]पाखण्डापजयः, [3]भक्तप्रकाशः । नाटकम्—अभ्युदयः । द्वैतशैवग्रन्थटीकाः—[1]भोजकृततत्त्वप्रकाशिकायाष्टीका, सद्योज्योतिकृततत्त्वसंग्रह[2]-तत्त्वत्रयनिर्णय[3]-भोगकारिकाणां[4] टीकाः, द्वितीयरामकण्ठकृतनादकारिकायाष्टीका[5], श्रीकण्ठकृतरत्नत्रयस्य[6] टीका, नारायणकण्ठकृतमृगेन्द्रागमवृत्तेष्टीका[7] च ।

## कान्यकुब्जे द्वैतसिद्धान्तशैवदर्शनप्रचारः

काश्मीरिकरामकण्ठद्वयविषये पूर्वं किञ्चिदुक्तम् । अयमपरो रामकण्ठो भगवद्गीतायाः सर्वतोभद्राभिधटीकाया रचयिता स्वात्मानं कान्यकुब्जदेशजातनारायणवंशजमुक्ताकणस्य कनीयांसं भ्रातरं वक्ति । मुक्ताकणश्च काश्मीरराजावन्तिवर्मणो राजसभायामेकः कविरासीदिति सुप्रसिद्धम् । एवञ्च यदि रामकण्ठेन स्वभ्रातृतयोल्लिखितमुक्ताकणस्य अवन्तिवर्मराजसभाकविना सहैक्यं स्वीक्रियेत,

तर्हि एवं प्रतिभाति यत्कश्चन एतस्य रामकण्ठस्य पूर्वजः अभिनवगुप्तपूर्वजवत् कान्यकुब्जात् काश्मीरं ललितादित्यनेनानीतः। अतः शक्यत इदं वक्तुं यत् कान्यकुब्जेऽपि सिद्धान्तशैवदर्शन-प्रचार आसीदिति, यद्यपि सन्देहलेश एतद्विषयेऽस्तीति स्वीकार्यमेव।

अतो नवमाद् ईशवीयशतकादारभ्य ईशवीयद्वादशशतकपर्यन्तं द्वैतसिद्धान्तशैवमतस्य प्रचारो गुर्जरे, चोले, मध्यप्रदेशे, कान्यकुब्जे, काश्मीरे चासीदिति सिध्यति।

## द्वैतशैवसिद्धान्तदर्शनस्य दार्शनिकविवरणम्

द्वैतशैवसिद्धान्तदर्शनस्य मौलिकसिद्धान्तानां वैशेषिक-न्याय-सांख्य-वेदान्त-पाशुपताद्यपर-दार्शनिकसिद्धान्तेभ्यो महान् भेदः। स चास्य दर्शनस्य स्वतन्त्रां सत्तां स्वीकुर्वद्भिः सम्यगवधेय इति यथायथं निरूप्यते।

## द्वैतशैवसिद्धान्तवैशेषिकदर्शनयोः सैद्धान्तिका भेदाः

१. द्वैतशैवसिद्धान्तस्वीकृतो जगदुत्पत्तिसिद्धान्तस्तद्विषयकवैशेषिकसिद्धान्ताद्भिन्नः। सिद्धान्तशैवदर्शनं सांख्यसिद्धान्तेन सह बहुष्वंशेषु साम्यं भजमानं परिणामवादं स्वीकरोति। एतन्मते माया विपरिणमते, पूर्वावस्थां परित्यज्य पयो दधिवदवस्थान्तरं परिगृह्णाति। इदं सत्कार्य-वादमप्यनुसरति, मनुते च यत् पयसि विद्यमानमेव दधि अभिव्यक्तीभवति। एवञ्च एतस्मिन्मते मायैव कलाविद्यारागनियतिकालादिरूपव्याख्यास्यमानतत्त्वरूपैः परिणमते। परं माया न सर्वथा, अपि त्वंशेनैव घृतकीटन्यायेन रूपान्तरं गृह्णाति। यथा घृतं तत्पतितकीटकारणात् कस्मिंश्चिदंश एव रूपान्तरं परिधत्ते तथैव मायाऽपि। अतः सत्कार्यवादिद्वैतसिद्धान्तशैवदर्शनमसत्कार्यवादि-वैशेषिकदर्शनाद्भिन्नम्।

२. कर्म चैतद्दर्शने बुद्धिधर्मो न तु वैशेषिकवदात्मधर्मः, यतोऽस्यात्मधर्मत्वे स्वीक्रियमाणे धर्मभूतस्य कर्मण उपचयापचयाभ्यां धर्मिण आत्मनो विकारित्वापातः।

३. यत्किञ्चिदप्यचेतनं सदनेकं तत्सर्वमनित्यमिति मन्यन्ते सिद्धान्तशैवाः। अत एतन्नये भूतभविष्यद्वर्तमानादिभेदभिन्नोऽचेतनः कालोऽनित्यः, न तु वैशेषिकवन्नित्यः।

४. पूर्वोक्तनयानुसारं न्यायवैशेषिकस्वीकृतमचेतनानामसंख्याकानां च परमाणूनां नित्यत्वं सर्वथाऽसंगतमिति मन्यन्ते सिद्धान्तशैवाः।

५. आत्मा च एतन्नये ज्ञानस्वरूपः, न तु ज्ञानमात्मगुणो यथा वैशेषिकदृशि।

## सिद्धान्तशैवसांख्ययोर्भेदः

वक्ष्यमाणांशेषु सिद्धान्तशैवसांख्ययोः पारस्परिको महान् भेदः—

१. पुरुषः पुष्करपलाशवन्निर्लेप इति सांख्यमतविरोधि पुरुषस्यानादिमलोपेतत्वं सिद्धान्तशैवैरभ्युपगम्यते, पुरुषस्यात्मनो वा नैर्मल्ये स्वीकृते भोगाभावप्रसङ्गात्; भोगस्य स्वाभाविकत्वाभ्युपगमे मुक्तस्यापि तत्प्रसङ्गात्। भोगासक्ती रागजन्या, रागश्च बुद्धिधर्मः, अतः पुरुषस्य नैर्मल्ये स्वीकृतेऽपि भोगासक्तिः सम्भवतीति न शक्यते वक्तुं सांख्यैः, यतो रागव्यापारः समलपुरुषसम्बन्धे सत्येव सम्भवति।

२. भोगोऽस्मिन्मते सांख्यसम्मतभोगाद्विलक्षणः। सांख्याभ्युपगतो भोग इत्थं व्याख्यातः—भोगश्चतुष्टयमपेक्षते—

१. बुद्धिपतितस्वप्रतिबिम्बतादात्म्यापन्नं पुरुषम्,

२. आन्तरपुरुष-बाह्यवस्तुजातप्रतिबिम्बग्राहिणीं बुद्धिम्,

३. बुद्धिप्रतिबिम्बितविषयम्,

४. अहङ्कारं च, यः (क) पुरुषप्रतिबिम्बं विषयप्रतिबिम्बेन संयोजयति, (ख) पुरुषप्रतिबिम्बं पुरुषेणैकीकरोति, (ग) पुरुषतत्प्रतिबिम्बतादात्म्यं व्यवहारार्थमुपयुनक्ति, (घ) 'अहमिदं जानामि' इति धियञ्च जनयति।

सांख्यसम्मतभोगस्वरूपञ्चाभिनवगुप्तपादैनैवमुल्लिखितमीश्वरप्रत्यभिज्ञाविवृत्तिविमर्शिन्याम्—"बुद्धिरूपं यत् सत्त्वं तस्य यतो नैर्मल्यं रजोऽपसारणसहिष्णुता तदीयतमोभागस्य, न तु नीलादाविवानपसारणीयत्वम्, ततो हेतोरुभयीमप्यात्मनो विषयस्य च संबन्धिनीं रूपच्छायां संवेदननीलमयतामनुकरोति, तदाकारधारितया भासते, नीलरक्तपटमध्यस्थितसितवस्त्रवत्, ततो हेतोस्तत्प्रतिबिम्ब आत्मविषयप्रतिबिम्बे यतो युज्यते, ततो विषयबोधस्वभावो भोगः सिध्यति। स हि ग्राह्यस्य ग्राहकस्य च यो मेलनात्मा सम्बन्धस्तद्रूपतयैव लक्षितः, नान्यदस्य रूपमित्याशयः।" (ई० प्र० वि० वि०, भा० १, पृ० १५३) इति, "बुद्धिबोधं हि यदात्मन्यविशिष्टतया अहङ्कारो व्यवहरति स एवायं भोगः" (ई० प्र० वि० वि०, भा० १, पृ० १५५) इति च। परन्तु सिद्धान्तशैवमतानुसारं भोगो बाह्यविषयप्रतिबिम्बापतनात्तद्रूपेण परिणताया दर्पणसदृश्या बुद्धेः पुरुषेणानुभवमात्रस्वरूपः। भोगे सत्यतो न पुरुषो बुद्धिपरिणामेन संसृष्टिं भजते, अपि तु तस्य विषयप्रतिबिम्बपरिणतबुद्ध्या तथैव संसर्गो यथा जलराशिप्रतिबिम्बितस्य चन्द्रमसो जलेन। अत एतन्मते चेतनः पुरुष एव भोक्ता कर्ता च, न त्वचेतनं बुद्ध्यादि, तेषां विषयस्वरूपत्वादचेतनत्वाच्च।

## शैवद्वैतदर्शनम्

### सिद्धान्तशैवदर्शनस्याद्वैतवेदान्ताद् भेदः

सिद्धान्तशैवदर्शनमद्वैतवेदान्तदर्शनाद्वक्ष्यमाणेष्वंशेषु भिन्नम्—

१. इदं जीवब्रह्मणोरैक्यं न मनुते। असंख्यानां जीवानां ब्रह्मणः पृथक् सत्तां स्वीकरोति, अभ्युपगच्छति च यत्ते भोगमोक्षार्थं परमात्मपरतन्त्राः।

२. जगदुपादानकारणमेतन्नये निमित्तकारणाद्भिन्नम्, न त्वद्वैतवेदान्तमत इवैकमेव। सिद्धान्तशैव उद्भावयति दोषमेकत्वाभ्युपगमे यत् कार्ये कारणधर्मानुगमस्य सर्वैरभ्युपगम्यमानत्वात् कार्यभूतस्य जगतश्चेतनाचेतनरूपत्वाद् ब्रह्म न केवलं चित्स्वरूपमपि त्वचित्स्वरूपमपि वेदान्तिभिरभ्युपेयं स्यात्।

३. समालोचयत्यद्वैतं वेदान्तिनां कथयन् यद् वेदान्तिभिर्ज्ञानं मोक्षोपाय इति स्वीक्रियते, परं क्वास्ति संभव उपायोपेयभेदस्य परमाद्वैत इति।

### द्वैतपाशुपतात् सिद्धान्तद्वैतस्य भेदः

यद्यपि सिद्धान्तशैवद्वैतं पाशुपतद्वैताद्भिन्नम्, तथापि बह्व्यः पाशुपतदर्शनविचारधाराः सिद्धान्तशैवदर्शनेन स्वीकृता इति स्पष्टं प्रतिभाति। पाशुपतदर्शने कारण-कार्य-योग-विधि-दुःखान्त-रूपाः पञ्च पदार्थाः समभ्युपगताः, परन्तु सिद्धान्तशैवदर्शने पतिपशुपाशास्त्रय एव प्रतिपाद्यन्ते। परन्तु सूक्ष्मे विचारे क्रियमाणे स्पष्टीभवतीदं यत् सिद्धान्तशैवाभ्युपगतः पतिपदार्थः पाशुपतदर्शनादेव परिगृहीतः, यतः पाशुपतैः कारणशब्देन व्यपदिष्टात् प्रथमपदार्थात् सिद्धान्तशैवप्रतिपादितस्य पतिपदार्थस्य न कोऽपि भेदः प्रतीयते। तथ्यं त्विदं यल्लकुलीशो यः स्वीयपाशुपतसूत्रे पूर्वभाविद्वैतपाशुपतदर्शनात् पञ्च पदार्थान् परिगृह्णाति स्म स कारणार्थे पतिशब्दं प्रयुङ्क्ते,यथा व्याख्यातं तट्टीकाकृता कौण्डिन्येन—"पशुपतेरिति कार्यकारणयोः प्रसादस्य चोद्देशः" इति। पशोः पाशस्य चापि विचारो द्वैतपाशुपतदर्शने कृत आसीदिति तन्मतं प्रतिपादयतः शङ्कराचार्यस्य वचनादवगम्यते। यथाह—"पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः" इति। अतः पशुपाशविषयिणीं विचारधारामनुसरन्तः सिद्धान्तशैवाः पशुपाशनामकपदार्थाभ्युगमेऽपि द्वैतपाशुपतदर्शनप्रभाविता इति भाति।

सिद्धान्तशैवैर्धर्मदर्शनयोः पार्थक्यं भारतीयापरदार्शनिकवत्कृतमिति धर्माश्रितं द्वैतपाशुपतस्वीकृतं योगविधिदुःखान्तस्वरूपपदार्थत्रयं पदार्थेषु न गणितम्। एवं पाशुपतदर्शनप्रभाविताः सिद्धान्तशैवाः पदार्थत्रयं स्वीकुर्वन्ति।

सिद्धान्तशैवानां जगदुत्पत्तिकारणसिद्धान्तोऽपि पाशुपतदर्शनादेवोपात्तः, यतस्तैरपि उपादाननिमित्तकारणयोः पार्थक्यं प्रतिपाद्यते। परं मुक्तिस्वरूपविषये तयोर्भेदः सुस्पष्टः। द्वैतपाशुपतमते दुःखान्त एव मोक्षः, परन्तु सिद्धान्तशैवमते शिवसाम्यं मोक्षः।

## सिद्धान्तशैवदर्शनस्य वैयाकरणदर्शनाद् भेदः

वैयाकरणदर्शनेतिहासः संक्षिप्तरूपेणागमपरिशिष्टमुपस्थापितः, विस्तारश्चास्याग्रे करिष्यते। भर्तृहरिः स्वीयवाक्यपदीये, तत्समालोचकः सोमानन्दश्च शिवदृष्टौ वैयाकरणदर्शनस्याऽद्वैतपरम्परामनुसृतवन्तौ। सिद्धान्तशैवदार्शनिकैः रत्नत्रयकृच्छ्रीकण्ठ-नादकारिकाकृद्द्वितीयरामकण्ठादिभिस्तु तस्य द्वैतपरम्परागताः सिद्धान्ता निबध्यन्ते स्म।

सिद्धान्तशैवमते शुद्धसृष्ट्युपादानस्वरूपो बिन्दुः 'परा' इत्यप्युच्यते। स च प्रथमोऽवान्तरपदार्थः। वाचः सूक्ष्मा-पश्यन्ती-मध्यमा-वैखरीतिरूपचतुष्टयं बिन्दुसम्बद्धमित्यादि तन्मतं सत्यवसरेऽग्रे व्याख्यास्यते।

## सिद्धान्तशैवाभ्युपगतानि तत्त्वानि

तत्त्वलक्षणम्—सिद्धान्तशैवानां तत्त्वलक्षणं महार्थसंहारेणातीव संबद्धम्। एतन्मते तत्तत्त्वं यन्महार्थसंहारे महाप्रलयेऽपि वा तिष्ठति, सर्वेषां सांसारिकाणां विश्वोत्तीर्णानां चानुभवानां साक्षात्परम्परया वा पृष्ठभूमिः। महाप्रलये सर्वमपि मायाया महामायायाश्च कार्यजातं स्वोपादानकारणे निमज्याऽभेदरूपेणास्ते। इयञ्च कार्याणां स्वोपादानाऽभेदावस्था सृष्टिभाविबहुत्वस्य कारणशक्तिरूपा। सृष्टिश्च द्विविधा—शुद्धा, अशुद्धा च। एवं मायापि द्विविधा—एका सा यस्याः कार्यजातं सांसारिकानुभवस्य कारणम्, अपरा च सा यस्याः कार्याणि विश्वोत्तीर्णानुभवानां मन्त्र-मन्त्रेश-मन्त्रमहेशैरनुभूयमानानां कारणत्वेन स्वीक्रियन्ते। सा च महामायेत्युच्यते। महाप्रलये सर्वाण्यप्यनुभवकारणानि वक्ष्यमाणरूपायां शक्तौ प्रलीयन्ते, सा च महामायायाम्।

### त्रीणि तत्त्वानि

अतो जगत्सृष्टिकारणसिद्धान्तं प्रतिपादयद्भिः सिद्धान्तशैवैस्त्रीणि प्रधानतत्त्वान्यभ्युपगम्यन्ते—१ महामाया, २ पुरुषः, ३ शिवश्चेति।

इदमिहावश्यं वक्तव्यं यद्यदा जगत्सृष्टिकारणसिद्धान्तस्तेषां मनसि न प्रधानीभवति तदेदं तत्त्वत्रयं पतिः, पशुः, पाश इति नामत्रयेण ते कथयन्ति। यद्यपि पतिपशुशब्दौ शिवपुरुषपर्यायौ, तथापि महामायापाशयोरत्यन्तं पारस्परिको भेदः। यतो मुख्यतत्त्वत्रये स्वीकृतः पाशो महामायापेक्षयाऽ-

तीव व्यापकः, पाशान्तर्गतेषु मल-माया-रोधशक्ति-कर्म-बिन्दुरूपाऽमुख्यपदार्थेषु बिन्दोर्महामायापर्य्यायत्वेन स्वीकरणात् ।

## सिद्धान्तशैवद्वैते षट्त्रिंशत्तत्त्वस्वीकारः

यद्यपि मुख्यं तत्त्वत्रयमेव स्वीकुर्वन्ति सिद्धान्तशैवाः, तथापि तदन्तर्गतं पदार्थषट्त्रिंशकमपि मन्यन्ते । षट्त्रिंशत्तत्त्वविषये शिद्धान्तशैवदर्शनव्याख्यातॄणां पारस्परिको मतभेदस्तत्र तत्रोपलभ्यते । पत्यन्तर्गतानि शिव शक्ति-मन्त्रमहेश-मन्त्रेश-मन्त्ररूपाणि पञ्च, पशुं विज्ञानाकल-प्रलयाकल-सकलेत्यवान्तरभेदभिन्नमप्यवान्तरभेदानुपेक्ष्य एकम्, पाशान्तर्गतं मल-निरोधशक्ति-माया-बिन्दु कर्मरूपपञ्चाप्रधानतत्त्वस्वीकारेऽपि चत्वार्यप्रधानतत्त्वानि न गणयित्वा मायामेकाम्, मायापरिणामभूतं कला-नियति-राग-विद्या-कालसहितं सांख्यस्वीकृतप्रकृत्यादिपृथिव्यन्तचतुर्विंशतिं चैकीकृत्य षट्त्रिंशत्तत्त्वानि परिगण्यन्ते कैश्चन । एवं भाति यदियं षट्त्रिंशत्तत्त्वपरिगणनाऽद्वैतागमानां द्वैतव्याख्यां समर्थयितुं कृता । अपरैश्चावान्तरषट्त्रिंशत्पदार्थाः काश्मीराद्वैतस्वीकृतनामभिरेव निर्दिष्टाः ।

## सिद्धान्तशैवाभ्युपगतमुख्यपदार्थत्रयस्वरूपम्

### १. पतिः—विश्वोत्तीर्णः शिवः

पतिनामकं विश्वोत्तीर्णशिवापराभिधं सिद्धान्तशैवस्वीकृतं प्रथमं तत्त्वं वेदोपलब्धस्य देवस्य पशुपतेः परिवर्धितं रूपमिवाभाति । वेदे पशुपतिश्चतुष्पदानामेव पतिः, इह तु स सर्वेषां पतिः । वेदे स चतुष्पदपालनशक्तः, इह तु सर्वशक्तिमान् ।

पतिरेकः, सर्वव्यापी, नित्यः, अनाद्यन्तः, अनादिमुक्तः, निर्मलः, चिद्घनः, प्रभुः, शान्तः, अकारणकारणम्, सर्गादिकार्याणां कर्ताऽप्यविकारः, कमलोन्मीलनकर्ता उष्णगभस्तिरिव, स निमित्तकारणं जगतः, उपादानकारणं तच्छक्तयः, माया च समवायिकारणम् । यथोक्तम्—

> निमित्तकारणं त्वीशो ह्युपादानं च शक्तयः ।
> समवायि तथा माया कार्यमेतज्जगत्त्रयम् ॥ इति ।
>
> ( म० पा० ३७ )

शक्तिस्तस्योपादनभूता यया स विश्वं सृजति, यत्र जीवाः स्वस्वकर्मानुसारं सुखानि दुःखानि वाऽनुभवन्ति, अन्ते च पतिस्तान् पाशमुक्तान् करोति । इयमेका, यद्यपि सा भिन्नसर्जनीयसंबन्धा-

द्भिन्नेव भाति । इयमपि परमार्थतश्चित्स्वरूपैव, अतश्च मायेव न विपरिणमते । पत्या सहैतस्याः समवायः सम्बन्धः । यथाह—

> शक्तो यया स शम्भुर्मुक्तौ मुक्तौ च पशुगणस्यास्य ।
> तामेकां चिद्रूपामाद्यां सर्वात्मनाऽस्मि नतः ॥ इति ।
>
> (त० प्र० ५)

आद्यां प्रधानभूतां समवेताम् ( त० प्र० टी० ५ ) । परन्तु श्रीकण्ठकृते रत्नत्रये शिवस्य शक्त्या संबन्धः सूर्यस्य स्वरश्मिभिरिवाभ्युपगतः ( र० त्र० २ ) । इयममोघा अपरिच्छिन्ना अत एवाविकल्परूपा, अकारणा, स्वप्रकाशा, सर्वोत्तीर्णा, अतिसूक्ष्मा, शिवादनन्यभूतापि शिवे धर्मिणि धर्मरूपेण तिष्ठतीत्यभ्युपगम्यमाना सिद्धान्तशैवानां द्वैताद्वैतप्रभावितत्वं गमयति । इदञ्च रत्नत्रयोल्लिखिताया अपरस्या विचारधारायाः प्रेक्षणेन समर्थ्यते । तत्रेदमभ्युपगम्यते यच्छिवशक्त्योरैकात्म्यम्, उभयोश्चित्स्वरूपत्वात् । परन्तु तयोः सम्बन्धकृतः कार्यकृतो न्यायाश्रितश्च भेदः । यतः स्वनिष्ठा चिच्छिवः, ज्ञानार्थं विषयाश्रिता च चिच्छक्तिः । तयोश्च धर्मधर्मिरूपः सम्बन्धः । शिवः परानपेक्षः, परं शक्तिः परापेक्षिणी । यथा अग्नेर्दाहकशक्तिर्दाह्येन्धनादिसंबद्धैवाभिव्यक्तीभवति, तथैव शिवस्य शक्तिर्बाह्यजगत्संबद्धैव स्वात्मानमभिव्यनक्ति ।

सिद्धान्तशैवाः खण्डयन्ति शक्त्यद्वयवादम्, यदनुसारं शक्तिरेव जगत्कारणं शिवश्च व्यर्थोऽभ्युपगमः । शिवाभ्युपगमं समर्थयन्ति च धर्मरूपायाः शक्तेर्धर्मिणं शिवं विना सद्भावस्यान्याय्यत्वं वदन्तः ।

एवञ्च केषुचित् स्थलेषु प्रकरणानुसारं शिवस्य शक्तिद्वयं वर्णितम्, यत्र चिच्छब्दो ज्ञानक्रियाशक्तिपरत्वेन मतः । अतो यत्र विश्वोत्तीर्णः शिवश्चिद्घन इत्युच्यते, तत्रायमभिप्रायो यज्ज्ञानक्रियाशक्त्योः शिवेन सम्बन्धः शरीरस्य शरीरिणा आत्मनेव । साम्येन चेदं द्योत्यते यद्यथा शरीरी स्वसमीहितं शरीरद्वारा संपादयति, एवं पतिरपि शक्तिद्वारा । क्वचन इच्छाज्ञानक्रियारूपं शक्तित्रयं प्रतिपादितमपरत्र सृष्टि-स्थिति-प्रध्वंस-पिधान-अनुग्रहरूपं शक्तिपञ्चकञ्च । शक्तिसंख्याविषये भेदः प्रकरणकृत इति स्पष्टं प्रतिपादितं तत्र तत्र ।

**द्विविधा सृष्टिः**

शुद्धाशुद्धरूपा द्विविधा सृष्टिः । पूर्वस्याः पत्यपरपर्यायः शिवः साक्षात् कर्ता, समवायि-

कारणं चास्या बिन्दुः। तस्माच्च शुद्धतत्त्वभुवनाद्युत्पाद्य मुक्तान् विद्येश्वरादीन् बैन्दवशरीरैर्योजयति ( त० प्र० टी० ९ )।

शुद्धसृष्टौ बिन्दोर्नादः—तस्माच्च परिणामक्रमेण शुद्धविद्याविर्भवति। नित्यशुद्धाऽपरिमितसर्वाधिकज्ञानक्रियाशक्तिमान् अशरीरोऽपि पतिः शुद्धां सृष्टिमुत्पादयति, यथा परिमितात्मा शरीरे स्पन्दम्। इदन्तु सर्वस्वीकृतं यन्निमित्तकारणं शरीरं तदैवापेक्ष्यते यदा तस्य सर्जनव्यापारः सविकल्पज्ञानग्राह्यवस्तुविषयो भवति। एवञ्च यतः शुद्धा सृष्टिः सविकल्पज्ञानग्राह्या न भवत्यतः तत्कर्ता शिवस्तदुत्पादनार्थं नापेक्षते शरीरम्। शुद्धा सृष्टिर्निर्विकल्पज्ञानभूमिः, न तस्यां विकल्पः प्रोद्भवति, यतः सा विकल्पज्ञानापेक्षितशब्दोत्पत्तिभूमेरूर्ध्ववर्तिनी।

अशुद्धा सृष्टिः पतिप्रेरितबैन्दवशरीरविद्येशानन्तादिकर्तृका। इयमशुद्धेत्युच्यते, यतोऽस्याः समवायिकारणं माया, यतश्चास्यां पाशबद्धाः पशवः कर्मानुसारं विविधसुखदुःखान्यनुभवन्तश्च सन्ति। इयं सविकल्पा सृष्टिः, यत इयं शब्दोत्पत्त्यनन्तरमस्तित्वं भजते।

२. पाशः

पाश एव पशोः पत्युर्भेदकारणम्। स चास्मिन्नये द्वितीयः पदार्थः। तदन्तर्गत-मल-माया-कर्म-निरोधशक्ति-बिन्दुसंज्ञकाः पञ्चावान्तरपदार्थाः। अवान्तरपदार्थानां मोक्षविषयकविचारधारया घनिष्ठः सम्बन्धः। कर्म-मायास्वरूपं बन्धनद्वयं वेदान्तिनोऽपि स्वीकुर्वन्ति, ये मन्यन्ते यदुपरिनिर्दिष्टबन्धद्वयापगम एव मोक्षः। परन्तु सिद्धान्तशैवानुसारं वेदान्तिसम्मतो मोक्ष आंशिक एव। यतस्तदुपात्तमलद्वयापगमानन्तरमपि पाशावान्तरतत्त्वेषु मलसंज्ञया निर्दिष्ट आणवो मलो बन्धकत्वेन विद्यत एव। एतन्मते मायाकर्माख्यमलद्वयमुक्ताः परं ध्वंसोन्मुखाणवमलयुक्ताः पशवो विज्ञानाकला इत्युच्यन्ते। इमे च यदा शुद्धायां सृष्टौ बैन्दवशरीराणि दत्त्वा आणवमलस्य ध्वस्यमानध्वस्ताद्यवस्थानुसारं विद्या-ईश्वर-सदाशिवाभिधासूच्चोच्चभूमिकासु नीयन्ते, तदा ते क्रमशो मन्त्र-मन्त्रेश-मन्त्रमहेशशब्दैरभिधीयन्ते। परापरद्विविधमोक्षप्रकरणानुसारं पाशसंख्यायां भेदस्तेषु तेषु ग्रन्थेषु लक्ष्यत इति न विस्मरणीयम्।

( अ ) मलः—आणवमलः

मलशब्दो यद्यपि साधारणतया मलत्रयार्थमुपयुज्यते, तथापि पाशान्तर्गतपदार्थगणनायामयं शब्द आणवमलार्थमेव प्रयुज्यते। अनादिरयं पशुज्ञानक्रियाशक्तितिरोधायकः। एकस्याप्यस्यानन्ताः

शक्तयः। तास्वेकयैकस्य पशोर्ज्ञानक्रियाशक्ती तिरोधत्ते, अत एवैकस्य परिमितात्मन आणवमलाऽपगमे न सर्वमुक्तिसंभवः। मलश्चायं चक्षुःपटलवद् द्रव्यस्वरूपः। निवृत्तिश्चास्य पत्याख्यवैद्यव्यापारसाध्या। परन्तु वैद्यव्यापारश्चक्षुःपटलपरिपाकवद् ईश्वरव्यापारो मलपरिपाकमपेक्षते। अयञ्च परिपाकः शैवागमोपदिष्टक्रियाचर्यायोगानुष्ठानसाध्यः।

अयं स्थलविशेषेषु पशुत्वमलसंज्ञयापि निर्दिष्टः। अथ चायमधिकारिमलशब्देनोच्यते यदास्य चर्चा व्यपगतमायाकर्ममलानां परिपक्वाणवमलानामात्मनां विषये क्रियते। यतः परिपक्वाणवमलेभ्य एवानन्तादिभ्यः पतिरशुद्धसृष्टिकर्तृत्वशक्तिं प्रयच्छति।

**( आ ) माया**

माया वस्तुरूपा सद्रूपा च, न तु वेदान्तिमत इवासत्यरूपा। इयमशुद्धसृष्टिगतस्य सर्वस्य कला-भुवन-सूक्ष्म-स्थूल-शरीरतदुपभोग्यविषयजातादेरुपादानकारणम्। परं मायाशब्दो बन्धनत्रयान्तर्गतैकबन्धनार्थे प्रयुक्तो मायाकार्याणि द्योतयति। बन्धनस्वरूपमायार्थे मायीयमलशब्दो बहुश उपलभ्यते। मायीयो मल आत्मनो बुद्ध्यादिभिस्तादात्म्यं जनयति। अनिदञ्च इदन्तया भासयति। सांख्यसंमतोऽनाद्य आत्मानात्माविवेको न स्वीकार्य आत्मनो बुद्ध्यादिभिस्तादात्म्यस्य कारणत्वेन। यतो यदकारणकं भवति न तद् ध्वंसमेति। अतोऽकारणकस्याविवेकस्य ध्वंसासंभवान्मुक्तेष्वपि स संभवेत्। अत आत्मनो बुद्ध्यादिभिस्तादात्म्यादिकारणभूता मायाऽवश्यमभ्युपेया।

**( इ ) कर्म**

अनुष्ठितकर्मणां फलराशिस्वरूपं कर्म प्रवाहानादितयाऽनादि स्वीक्रियते। इदञ्च भोगस्य सुखदुःखादेर्भोगसाधनानाञ्च शरीरेन्द्रियाणां प्रत्यात्मनियतत्वेन विचित्रत्वात्तद्वैचित्र्यकारणत्वेनावश्यमभ्युपेयम्। अनन्तादिकृताऽशुद्धा सृष्टिः कर्माधीना, यतस्ते प्राणिकर्मभोगार्थं सृज्यमानायां सृष्टौ सर्वान् भोग्य-भोजक-भोगसाधनादींस्तथा सृजन्ति, यथा सर्वे स्वस्वकर्मानुसारं भोगं भोक्तुं शक्नुयुः।

भारतीयः कर्मसिद्धान्तः प्रत्यभिजानीते यत्प्राणिनः क्रियमाणकर्मणः फलं याथार्थ्येन ज्ञातुं न शक्नुवन्ति। "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इत्येष सिद्धान्तः सम्यगनुसृतः कुपथान्निवार्य सुपथं नयति।

**( ई ) निरोधशक्तिः ( तिरोभावः )**

निरोधशक्ती रोधशक्तिर्वा न केवलं पाशेषु परिगणिता, अपि तु पारमेश्वरशक्तिष्वपि। इदं चाभ्युपगम्यते यन्मुख्यतयेयं पारमेश्वरशक्तिरेव, पाशत्वं तु तस्याः पाशधर्मानुवर्तनेनोपचारात्

( त० प्र० १० ), यतः सा परमेश्वरस्य उपकरणम् । मलान्तरसहकृतेनानेनोपकरणेन निगडेनेव नियम्य प्राणिनः स्वस्वभोग्यभोगान् प्रति नयति परमेश्वरः ।

**( उ ) बिन्दुः**

बिन्दुर्न केवलं मलस्वरूपः, अपि तु शुद्धसृष्ट्युपादानभूतोऽपि, यथा प्राक् प्रतिपादितम् । मलस्वरूपस्य बिन्दोर्मोक्षविचारधारयातीव घनिष्टः संबन्धः । मोक्षो द्विविधः—परोऽपरश्च । मायाकर्मरूपपाशद्वयविमुक्तः पशुर्न सर्वथा मुक्तः, आणवापरपर्यायपशुत्वमलस्य सद्भावात्, अतः सोऽपरमोक्षभाक् ।

सिद्धान्तशैवानामिमेऽभ्युपगमाः—(क) अस्माल्लोकादूर्ध्वं बहवो लोकाः सन्ति यत्र कर्मादिपाशबद्धा जीवाः कर्मभोगान् भुञ्जन्ति । (ख) मायोर्ध्वभाविनः पञ्च पदार्थाः, येषु सदाशिव-ईश्वर-विद्याख्यं त्रयं गण्यते । (ग) मायाकर्मोभयपाशविमुक्ता ध्वस्यमानाद्यवस्थावशिष्टाणवमलाः क्रमशोऽनुभूतविद्या-ईश्वर-सदाशिवतत्त्वाः पशवः मायीयलोकोर्ध्वोर्ध्ववर्तिषु त्रिषु लोकेषु क्रमशो निवसन्ति, ते च क्रमशो मन्त्र-मन्त्रेश-मन्त्रमहेशशब्दैरभिधीयन्ते । एषां शरीराद्युपादानकारणं बिन्दुः । एवं चैतादृशप्रकरणेषु बिन्दुरुपादानस्वरूपत्वेन सृष्टिकारणत्वेन व्याख्यायते, परन्तु यतो यावद्बिन्दुकारणकाच्छरीरान्मुक्तिर्न भवति, न तावत् परमोक्षः, अतो बिन्दुर्मलत्वेनाप्युच्यते ।

**बिन्दुरवान्तरपदार्थेषु प्रथमः**

सिद्धान्तशैवाभ्युपगतेषु षट्त्रिंशदवान्तरपदार्थेषु बिन्दुः प्रथमः । स च शिवशब्देनाप्यभिधीयते । परन्तु शिवशब्दो बहुशः प्रथमप्रधानपदार्थार्थमपि प्रयुज्यते । अतः पाठकेन प्रकरणानुसारं शिवपदार्थो निर्णेयः । परन्तु केचन सिद्धान्तशैवदर्शनप्रतिपादयितारः पत्यर्थे परशिवशब्दं प्रयुञ्जते । यथा—"तत्त्वातीतः परः शिवः" इति ।

बिन्दुः शिवापरपर्यायो महामायाशब्देनाप्यभिधीयते । अयमेको नित्यः, शक्ति-सदाशिव-ईश्वर-विद्याख्याश्चावान्तरपदार्था अस्यैव परिणामभूताः शरीरांशे । अयं तत्तद्भुवनेश्वराराधनाद् दीक्षया वा स्वकार्यभूतशुद्धाध्वभुवनप्राप्तानां ज्ञानक्रिये प्रकटयति । अयं कुण्डलिनीशब्देनाप्यभिधीयते । अयं परशिवस्य परिग्रहशक्तिरूपः । नायं स्वतन्त्रः, जाड्यात्, अपि तु परशिवेच्छापरवशः ( त० प्र० २७ ) ।

**बिन्दुपरिणामो नादः**

बिन्दुर्न केवलं शुद्धसृष्ट्युपादानकारणत्वेनाभ्युपगतः, अपि तु परिमितप्रमात्रुपाधिभूतनादकारणत्वेनापि । नादरूपोपाधेरावश्यकता चेत्थं स्थाप्यते—

'कः खलु परिमितप्रमातुर्लौकिकज्ञानेन संबन्धः' इति प्रश्ने समुपस्थिते स सम्बन्धो न समवाय इति शक्यते वक्तुम्, यथा वैशेषिकाः कथयन्ति। यतः प्रत्येकमात्मनो ज्ञानमुपचयापचयौ भजते। अत आत्मना सह ज्ञानस्य समवायसम्बन्धाभ्युपगमे आत्मनः परिवर्तनशीलत्वमतश्चानित्यत्वमापतति। अतः सिद्धान्तशैवनये ज्ञानं नात्मनि समवेतमपि तु तदुपाधिरूपे नादे, यो बिन्दोः परिणामः। असंख्या नादाः प्रत्यात्मभिन्नाः। परिमितात्मन उपाधिभूतो नादोऽभिधेयबुद्धिबीजरूपः (र०त्र० २३-४)। आत्मनो ज्ञानशक्तिर्विभिन्नसूक्ष्मशब्दरूपनादवृत्तिसंपृक्ता सती मायीयसविकल्पार्थावलोकने प्रवर्तते, नादरूपोपाधिकारणाद्विचित्रेव भासते च। भिन्नानि ज्ञानानि नादवृत्तिरूपाण्येव, न तु बुद्धिवृत्तिरूपाणि, यथा सांख्याः कथयन्ति। यतो बुद्धिवृत्तिरूपत्वेऽभ्युपगते शुद्धभुवनेषु वर्तमानानामनन्तादीनां सविकल्पकज्ञानाभावप्रसङ्गः। यतस्ते मायोर्ध्ववर्तिनोऽतस्तेषु न संभवति बुद्धिः। सविकल्पज्ञानं च तेष्वावश्यकम्, ऐहलौकिकविचित्रसृष्टिकर्तृत्वात्। अतो नादः स्वीक्रियते सिद्धान्तशैवदार्शनिकैः।

## वैयाकरणदर्शनाभ्युपगतस्फोटनिरसनपूर्वकं नादसमर्थनम्

वैयाकरणदर्शने एको मुख्यः प्रश्नोऽयम्—कथं शब्दाः वाक्यानि चार्थज्ञानं जनयन्ति। स चैवमुत्थाप्यते। शब्दघटकान्यक्षराणि क्रमशः श्रुतिपथमागच्छन्ति, क्रमेणैव ज्ञायन्ते, नश्यन्ति चोच्चारणक्षणसमनन्तरमेव। एवं चार्थस्य शब्देन सह संबन्धात्, शब्दघटकाक्षराणामुच्चारणक्षणसमनन्तरविनाशित्वादक्षरराशिस्वरूपाणां शब्दानां तद्धटितवाक्यानां च प्रत्यक्षीकरणासंभवाद् न संभवत्यर्थज्ञानम्। न चेदं शक्यते वक्तुं यदर्थज्ञानं शब्दान्तिमवर्णाच्छ्रूयमाणात् सम्भवति; उदाहरणतः 'गौः' इति शब्दान्तभाविनो विसर्जनीयात्। यतोऽस्मिन् मते स्वीकृते न शक्यत उत्तरयितुमयं प्रश्नो यद् नरशब्दान्तभाविनः श्रूयमाणाद्विसर्गात् कुतो न भवति सास्नालाङ्गूलककुदखुरविषाणिनो ज्ञानम्, अन्त्यविसर्गस्योभयत्राप्युपलभ्यमानत्वात्। न चेदमपि शक्यते वक्तुं यद्विसर्जनीयात् पूर्वाक्षरजातसंस्कृतिसहायकात् संभवति वाच्यबुद्धिः। यतः संस्कारा अपि यैरेव पूर्वानुभूतैर्विषयैर्बुद्धावारोपितास्तेष्वेव घटादिषु स्मृतिहेतवो भवन्ति नाननुभूतेषु पटादिषु, अतः संस्कारा अपि यैर्वर्णैर्बुद्धावारोपितास्तेष्वेव ज्ञानहेतवो युक्ता नार्थे। एवञ्च पदस्य वाक्यस्य वा नार्थबुद्धिजनकत्वं सम्भवति।

उत्तरं चेत्थं प्रदीयतेऽस्य—पूर्वपूर्ववर्णसंस्कारसहितान्त्यवर्णाभिव्यङ्ग्योऽन्य एवाविनिर्भक्तो मायूराण्डरसवदनेकवर्णावभासकः पदात्मा पदव्यतिरिक्तश्च वाक्यस्वभावः समस्तस्य जगतो युगपत्

क्रमेण वार्थप्रतीतिहेतुत्वाद् व्यापको नित्यश्च स्फोटोऽभ्युपगन्तव्यः। यतः स एव व्यवहर्तॄणामर्थं स्फुटयति। इत्थञ्च स्फुटत्यर्थो यस्मात् स स्फोट इति वैयाकरणैः स्फोटसिद्धान्तः स्थाप्यते। स चेत्थं निरस्यते सिद्धान्तशैवैः—

न शक्यते स्फोटः स्वीकर्तुं वर्णव्यतिरिक्तस्य तस्याननुभवात्, तस्य वर्णेभ्यो भिन्नाभिन्नत्व-प्रतिपादनस्याशक्यत्वात्। न तावद्भिन्नः, वर्णव्यतिरेकेण शशविषाणादेरिव तस्यानुपलब्धेः। न चानुमानात् स्थितिरुपपद्यते, तस्य प्रत्यक्षनिराकृतत्वात्। अभिन्नत्वे स्वीकृते 'हस्तः करः' इति-वदेकार्थाभिधानाद् वर्ण एव स्फोटः, न तु ततो भेदेनावस्थित इत्यापातात्। विभुत्वे चास्यैकपुरुषो-च्चरितैर्वर्णैरभिव्यक्तिमत्त्वे सति विशेषाभावाद्देशान्तरेऽपि नित्यत्वाच्च कालान्तरेऽपि प्रमातॄणामर्थ-प्रतिपत्तिसंभवापातात्।

अत एके विज्ञानमेवार्थोद्भावकं स्वीकृतवन्तः। तन्मतं चेत्थम्—

व्यक्तं सास्नालाङ्गूलककुदादिलक्षणमर्थं बुद्ध्याध्यवस्य तदनुगुणं गौरित्यादिपदं चिन्तयै-वानुसन्धाय स्थूलं शब्दं प्रयुङ्क्ते साधारणो जनः।

एवं प्रयुज्यमानः शब्दः श्रोतृकर्णशष्कुलीं गतो न केवलं स्मृतिकृतात् संयोजनात् प्रागनु-भूतं शब्दमेव स्मारयति, अपि तु नियमेन तत्सहचरमर्थमपि। एवञ्च शब्दार्थयोर्वाचकवाच्य-संबन्धः शब्दार्थप्रतीतिश्च।

इयमान्तरस्य परामर्शज्ञानस्य वाचकता स्वीक्रियते सिद्धान्तशैवैः। अभ्युपगम्यते च बुद्ध्याकारस्य वाचकस्य बाह्याकाराद् वाच्याद् विशेषः "बाह्याकारपरामर्शरूपत्वाद्वाचकत्वम्, ततश्च वाचकैः परामर्शज्ञानभेदैर्गवादिलक्षणा बाह्याकारभेदा विमृश्यमाना वाच्या भवन्ति" इति मन्यमानैः। परन्तु नादसत्तां स्थापयद्भिरेभिरुच्यते यद् वाच्याद्भिन्नस्यार्थान्तरस्य विमर्शात्मक-विज्ञानस्य नाऽकारणमुत्पत्तिः, कादाचित्कत्वात्। तच्च कारणं नादशब्देनाभिधीयते।

## नादपदव्याख्यानम्

बुद्ध्याध्यवस्यमानो विषयो न बुद्धिप्रभवः। बुद्धिबाह्यो ह्ययमिन्द्रियैः प्रत्यक्षीक्रियते। बुद्धिगतविषयप्रतिबिम्बं यद् बुद्धिरध्यवस्यति तत् केनापीन्द्रियेण निर्विकल्पकपरिगृहीतमेवेति स्वीकार्यम्, कस्यचनैव विषयस्य एकस्मिन् कालेऽध्यवसायसंभवात्। एवमेवान्तरविषयाध्यवसाये बुद्ध्या अन्तःसंजल्पेन परिगृहीत एव विषयोऽध्यवसितो भवति। अक्षरबिन्दुरूपस्यान्तः-संजल्पस्य कारणं नादः।

## सिद्धान्तशैवदृष्ट्याऽर्थग्रहणप्रकारः

नादोऽन्तःसञ्जल्पस्याऽक्षरबिन्दुपराभिधस्य कारणम् । एवञ्च नाद एव शब्दार्थ-ज्ञानस्य कारणम्, यतो नादोऽन्तःसंजल्पं जनयति, येन बुद्धिर्बाह्यविषयप्रतिबिम्बमध्यवस्यति। बाह्यो व्यक्तः शब्द आन्तरसंजल्पस्य बाह्याकार एव, अतो न परमार्थतोऽर्थबुद्धिजनकः ।

असंख्येया नादाः । एकैकः प्रत्येकेन परिमितात्मना संबद्धः । स च व्यक्तिविशेषेऽन्तः-संजल्पोद्भावको बाह्यविषयस्य सविकल्पग्रहणकाले । संजल्पश्च शब्दार्थयोरैक्यरूपात्मकः ।

बाह्यविषयस्य प्रतिबिम्बे कस्मिंश्चिदिन्द्रिये समापतिते वक्तृनिष्ठो नादः शब्दार्थैक्यात्म-कान्तःसञ्जल्परूपेण विषयं बुद्धेः पुर उपस्थापयत्यध्यवसायार्थम् । बुद्धिरध्यवस्यति । बुद्धिकृतोऽ-ध्यवसायो व्यक्तवर्णैः प्रकटीक्रियते । श्रूयमाणा वर्णाः श्रोतृनिष्ठं नादमभिव्यक्तीकुर्वन्ति । अभिव्यक्तो नादः श्रोतृबुद्धेः पुरः शब्दार्थैक्यात्मकान्तःसंजल्पमुपस्थापयति । श्रोतृबुद्धिः शब्दार्थयोः पृथक्-करणरूपमध्यवसायं कृत्वाऽस्यायमर्थ इत्यध्यवस्यति ।

एवं प्रत्येकं नादो निखिलशब्दतदर्थाव्यक्तरूपः, यत्र सर्वे मयूराण्डरसे तत्पक्षवर्णा इव परस्पराऽविभक्ततया ऐक्येन सन्तिष्ठन्ते । एष एव बाह्यविषयस्य प्रत्यक्षीकरणसमये द्रष्टरि, एवं चाध्यवसितविषयबोधनाय प्रयुक्तानां वर्णानां श्रवणकाले श्रोतरि, शब्दार्थैक्यरूपमन्तःसञ्जल्पमुद्-भावयति । यस्य शब्दार्थयोः पृथक्करणरूपेऽध्यवसाये क्रियमाणेऽस्यायमर्थ इति शब्दार्थप्रतीति-र्भवतीति सिद्धान्तशैवानां नादराद्धान्तः ।

अयं बिन्दुः पराशब्देनाप्युच्यते ।

अस्मादेव सूक्ष्मा-पश्यन्ती-मध्यमा-वैखरीरूपाश्चतस्रो वाचः समुद्भवन्ति । एतद्विषये भर्तृहरिश्रीकण्ठयोर्मतभेदः । भर्तृहरिरद्वैतदृष्ट्या वैयाकरणदर्शनं प्रतिपादयन् सूक्ष्मा-पश्यन्त्योरैक्य-मभ्युपगच्छति । वाक्यपदीये हि 'सूक्ष्मा वागनपायिनी' इत्यत्र समुपात्तः सूक्ष्माशब्दः पश्यन्त्या विशेषणम् । परन्तु श्रीकण्ठः सूक्ष्मां भिन्नां पश्यन्त्युपरिभाविनीं वाचं मनुते, नादसूक्ष्मयोश्चैक्यं स्वीकरोति । अतो नादापरपर्याया सूक्ष्मा एतन्मते बिन्दोः प्रथमः परिणामः, एवं चाघोरशिवकृत-टीकानुसारं पश्यन्त्यक्षरबिन्द्वोरैक्यमतः पश्यन्तीविषयेऽप्यनयोर्मतभेदः ।

भर्तृहरिमते पश्यन्तीसाक्षात्कार एव ब्रह्मसाक्षात्कारः, पश्यन्त्या ब्रह्मरूपत्वात् । परं द्वैत-वादी श्रीकण्ठः कथयति यत् पुरुषसूक्ष्मयोः पारस्परिकभेदज्ञानं ज्ञातारं भोगाधिकारादेव मोचयति ।

सूक्ष्मा यस्या भर्तृहरिपादैः पश्यन्त्या सह तादात्म्यं कृतम्, सा श्रीकण्ठमते न ब्रह्म, अपि त्वचेतनस्य बिन्दोरचेतनः परिणामः।

बिन्दुनादौ शिवशक्तिशब्दाभ्यामुच्यमानौ सिद्धान्तशैवाभ्युपगतषट्त्रिंशदवान्तरपदार्थेषु प्रथमद्वितीयौ।

बिन्दुनादात्मको विषयोऽतीव गहनः क्लिष्टश्चेति नाधिकमिह शक्यते व्याख्यातुं निर्धारितसमये। अत इममिहैव परित्यज्यावशिष्टं तृतीयं पदार्थं मोक्षस्वरूपञ्च संक्षेपेण प्रतिपाद्य समाप्नोमीदं व्याख्यानम्।

( ३ ) पशुस्तृतीयो मुख्यपदार्थः

क्षेत्रज्ञादिपर्यायः पशुर्न देहात्मा यथा देहात्मवादिचार्वाकमते। न ज्ञेयो यथा नैयायिकमते। न देहपरिमाणो यथा जैनमते। न क्षणिको यथा बौद्धमते। नापि परमार्थतो ब्रह्मस्वरूपः, यथा वेदान्तिमते। नापि ज्ञानक्रियाशक्तिरहितः, यथा सांख्यमते। परन्तु ज्ञानक्रियाशक्तिमान् नित्यः, यस्यापरिमितज्ञानक्रियाशक्ती ईशप्रसादान्मुक्तावभिव्यक्ते भवतः, एवञ्च यः शिवसाम्यमवाप्नोति।

पशुस्त्रिविधः, विज्ञानाकल-प्रलयाकल-सकलभेदात्। विज्ञानाकला एव आणवमलस्य विभिन्नध्वस्यमानध्वस्तादिदशानुकूलं मन्त्र-मन्त्रेश-मन्त्रमहेशशब्दैरुच्यन्ते। विज्ञानाकलाश्च कलादितत्त्वविमुक्ता मायीयकार्ममलद्वयरहिता विध्वंसिष्वाणवमलमात्रयुताः स्वीक्रियन्ते।

प्रलयाकल आणवकार्माख्यमलद्वययुक्तः पशुः प्रलयकालभाविपरिमितप्रमातृरूपः। सकलो मलत्रययुक्तः पशुः। अयं खलु कलादिपृथिव्यन्तत्रिंशत्तत्त्वसंबद्धः, यथा वयम्।

मोक्षः

मोक्षस्य परापरभेदाद् द्वैविध्यं परमोक्षस्य शिवसाम्यरूपत्वञ्च प्रागेवोक्तम्। परमोक्षेऽपरिमितज्ञानक्रियाशक्ती पशौ वर्तमाने परं मलाच्छादिते क्रिया-चर्या-योगानुष्ठानाद् व्यपगतमायाकर्ममले ईशानुग्रहादपेताणवमले च पशावभिव्यक्तीभवतः, ततश्च पशुः शिवसाम्यमवाप्नोति, परन्तु शिवात् पृथगेव सन्तिष्ठते। अतो मोक्षेऽपि पशोः शिवात् पृथक्सत्तास्वीकाराद् द्वैतमिदं दर्शनम्।

## उपसंहारः

द्वैतदर्शनं सांसारिकसाधारणजनदृष्टिकोणमाश्रित्य प्रवर्तते। साधारणो जनो दुःखाक्रान्त ईश्वराराधनेन दुःखविमुक्तो भवति। परमद्वैतदर्शने ईश्वराराधनमनर्थकम्। यत आराध्यो मिथ्या, अत आराधकस्येश्वरमुद्दिश्याक्रन्दनं निर्जनवन इवाक्रन्दनम्। अद्वैतं मानुषेभ्य ईश्वरकृतदुःखापहरणाशां छिनत्ति। इदं धर्ममूले कुठाराघातमिव करोति, यतो धर्माचरणं द्वैतमाश्रित्यैव संभवति। अतः साधारणजनैर्द्वैतमेवाश्रयणीयमित्युपसंहरन्नवसरान्तरे लब्धेऽस्य सिद्धान्तस्यावशिष्टांशविवरणं प्रतिजानानो विरमाम्यत्र॥

ॐ शान्तिः शान्तिः शान्तिः॥



# शैवद्वैताद्वैतदर्शनम्

डॉ० कान्तिचन्द्रपाण्डेयः, लक्ष्मणपुरम् ।

महनीयपरिषत्पते, माननीयाश्च पारिषद्याः !

प्रथमे व्याख्याने शैवद्वैतदर्शनद्वयं व्याख्यातम् । तयोरेकस्य बादरायणकृते ब्रह्मसूत्रे, शङ्कराचार्यकृते शारीरकभाष्ये, आनन्दगिरिवाचस्पतिमिश्रगोविन्दानन्दकृतासु तट्टीकासु च पत्यधिकरणे निरस्यमानेन शैवदर्शनेन सह तादात्म्यं संस्थापितम्, हरिभद्रसूरिराजशेखरकृती षड्दर्शनसमुच्चयनाम्न्यौ श्रीकण्ठकृतं श्रीकण्ठभाष्यं चाश्रित्य तस्य 'पाशुपतम्' इति नाम निर्धारितम् । तस्य च द्वैतपरतया द्वैताद्वैतलकुलीशपाशुपताद् भेदोऽप्यंशेन प्रदर्शितः ।

अस्मिन् व्याख्याने सेतिहासं प्राधान्येन यथासमयं द्वैताद्वैतपरं लकुलीशपाशुपतदर्शनं सविस्तरम्, अन्यानि द्वैताद्वैतदर्शनानि ससंक्षेपम्, लाकुलीशदर्शनस्य श्रीकण्ठीयविशिष्टाद्वैतोपरि प्रभावम्, श्रीकण्ठरामानुजयोर्विशिष्टाद्वैतप्रतिपादने शब्दश्रेणिमात्रकृतं भेदं च व्याचिख्यासुः समुपस्थितोऽहं भवतां पुरः ।

लकुलीशदर्शने धर्मदर्शनयोः पार्थक्यं न क्रियते । अत इदं न केवलं दार्शनिकतत्त्वनिरूपणपरमपि तु परमोपेयपरतत्त्वप्राप्त्यर्थमनुष्ठेयकर्मरूपधर्मप्रतिपादनपरमपि, दार्शनिकपदार्थेषु विधेरपि स्वीकरणात् ।

"अथातः पशुपतेः पाशुपतं योगविधिं व्याख्यास्यामः" इति प्रथमसूत्रानुसारं विधिप्रतिपादनस्योद्देश्यत्वादाधुनिकपाश्चात्त्यदर्शनप्रभावितदार्शनिकदृष्ट्या विधेरदार्शनिकत्वेऽपि तस्यापि सुसंक्षिप्तं विवरणं करिष्यतेऽस्य दर्शनस्य सर्वाङ्गीणताप्रतिपादनाय ।

## लकुलीशपाशुपतदर्शनोद्भवकालः

लकुलीशपाशुपतदर्शनोद्भवकालविषये नास्ति कश्चनापि सन्देहः । यतो मथुरास्तम्भलेखम्, सोमनाथशिलालेखम्, वायुपुराण-लिङ्गपुराण-सूतसंहिता राजशेखरकृतषड्दर्शनसमुच्चयेषूपलब्धलकुलीशशिष्यपरम्परां चोपजीव्य ऐतिहासिकदृष्ट्या लकुलीश ईशवीयद्वितीयशतकभव इति मतं सुसमर्थ्यम् ।

(अ) मथुरास्तम्भलेखः किञ्चिन्नष्टोऽपि प्रमाणान्तरसहकृतैर्नष्टावशिष्टांशैः प्रमाणयति यल्लकुलीश ईशवीयद्वितीयशतके समभूदिति। 'अयं कदोत्कीर्णः?' अस्य प्रश्नस्योत्तरं तत्रैवेत्थमुपलभ्यते—

"एकषष्टे ६११ (प्र)थमे शुक्लदिवसे पञ्चम्याम्" इति।

यद्यप्युत्कीर्णलेखस्य सोंऽशो भग्नः, यस्मिन् संवत्सरनाम प्रदत्तमासीत्तथाऽपि प्रमाणान्तरैरिदं निश्चीयते यत् तत्रोत्कीर्णः 'एकषष्टि'शब्दः समुद्रगुप्तपुत्रविक्रमादित्योपाह्व-चन्द्रगुप्तसञ्चालित-गुप्तशतकपरः, यस्य प्रारम्भः फ्लीट्-सिल्वन्लेव्यादिपाश्चात्यविदुषां मते एकोनविंशत्यधिकद्विशततमे ईशवीयवर्षे सञ्जातः। इदं मतमेवं शक्यसमर्थनम्।

(आ) के०वी०पाठकमहोदयेन जैनग्रन्थप्रामाण्यमाश्रित्येदं साधितं यद् एकचत्वारिंशदधिकद्विशतसंख्यया संयोज्य गुप्ताब्दसंख्या शकाब्दसंख्यायां परिणमयितुं शक्या। एवं कृते मथुरास्तम्भलेखोत्कीर्णा एकषष्टिसंख्या उपर्युक्तसंख्यया संयोजिता द्व्यधिकत्रिशततमशकाब्दपरा। तदनुसारञ्च अशीत्यधिकत्रिशततमाम् ईशवीयशतकसंख्यां गमयति।

(इ) अपरञ्च स्तम्भलेखे 'प्रथमे' इति शब्दो विद्यते। स च द्योतयति यद् यस्मिन्नब्देऽयं लेख उत्कीर्णस्तस्मिन्नधिमास आसीत्। स्वामी कुन्नूपिल्लाइलिखितस्य—'इण्डियन क्रानोलोजी' इतिनाम्नः पुस्तकस्य दशमसूचिकायां द्विचत्वारिंशे पृष्ठे प्रदर्शितमिदं यदशीत्यधिकत्रिशततमे ईशवीये वर्षे आषाढद्वयमासीत्। उक्तप्रमाणद्वयमवलम्ब्यैतिहासिकदृष्ट्याऽसन्दिग्धमिदं यन्मथुरास्तम्भलेखः पूर्वोक्त ईशवीये वर्षे समुत्कीर्णः।

तत्र च माहेश्वरगुरुपरम्परा एवमुत्कीर्णा—

उदिताचार्यस्य गुरु-परमगुरु-परमेष्ठिगुरवः क्रमेणोपमिताचार्य-कपिल-पाराशराः समभूवन्। स चायमुदिताचार्यो गुरुपरम्परायां कौशिकाद्दशमो गुर्वायतने कपिलेश्वर-उपमितेश्वर-मूर्ती प्रत्यष्ठापयत्।

अत इदं प्रतिभाति यद् गुर्वायतनं तथाविधं स्थानमासीद्यत्र पूर्वगुरूणां समुत्कीर्णपूर्वगुरु-मूर्तीनि स्मारकलिङ्गानि प्रतिष्ठाप्यन्ते स्म। इदञ्च गुरुनाम्न ईश्वरशब्देन सह समसनादनुमीयते। इदमनुमानमुत्कीर्णलकुलीशमूर्त्योर्लिङ्गयोः कारवनस्थयोर्नकुलेश्वर-राजराजेश्वरनाम्नोर्मन्दिरयोः समुपलम्भेन दृढीक्रियते। इदं स्थानं तेन स्थानेन सदृशं सम्भवत आसीद्यस्य चर्चा भासकृत-प्रतिमानाटकतृतीयाङ्के समुपलभ्यते, यत्र च रघुवंशीयानां गतराजानां मूर्तयो रक्ष्यन्ते स्म।

## शैवद्वैताद्वैतदर्शनम्

परन्तु स्तम्भलेख एकं महान्तं प्रश्नमुत्थापयति । यद्यप्यत्र पाराशरोदिताचार्ययोर्मध्यवर्तिनी गुरुद्वयनामनी समुत्कीर्णे, तथापि पराशरकौशिकयोर्मध्ये जातानां पञ्चगुरूणां नामानि न सन्ति । अतः 'कोऽयं कौशिकः' इति प्रश्नो जागर्ति ।

अस्य प्रश्नस्योत्तरं वायुपुराणलिङ्गपुराणाभ्यामुपलभ्यते, यत्रेदमुल्लिखितम्—( क ) लकुली महेश्वरस्यान्तिमोऽवतारः । ( ख ) स च कायारोहणे कायावतारापरपर्य्याये समभूत् (इदं स्थानमद्यत्वे बड़ोदाराज्यान्तर्गतं 'कार्वन' इति नाम्ना ख्यातम् ।) ( ग ) तस्य चत्वारस्त्यागिनः शिष्याः कौशिक-गर्ग-मित्र-कौरुष्याभिधा आसन् इति ।

इदं पौराणिकं वचनं प्रथमं सोमनाथमन्दिरे समुपलब्धेन परमधुना पोर्चुगाले विद्यमानेन शिलालेखेन समर्थ्यते । अयं शिलालेखः डा०ब्यूलरमहोदयेन एपिग्राफिका-इण्डिया-प्रथमभागे एकसप्तत्यधिकद्विशतपृष्ठादारभ्य तत्समनन्तरवर्तिपृष्ठेषु प्रकाशितः । चत्वार्यपि पूर्वोपात्तानि लकुलीश-शिष्यनामानि सन्ति तत्रोत्कीर्णानि । यद्यप्यन्यानि नामानि कथञ्चिद्भिन्नानि, तथापि कौशिक-नाम तथैवोपलभ्यते यथा पूर्वोक्तपुराणयोः । अयं शिलालेखः चालुक्यवंशजस्य राज्ञः शार्ङ्ग-देवस्य काले समुत्कीर्णः ।

'कौशिक' इति नाम लकुलीशप्रथमशिष्यनामतया न केवलं पूर्वोक्तपुराणयोरुपलभ्यते, अपि तु सूतसंहितायां लकुलीशक्षेत्रप्रसङ्गे, राजशेखरकृते षड्दर्शनसमुच्चये, हरिभद्रसूरिकृत-षड्दर्शनसमुच्चयस्योपरि गुणरत्नसूरिकृतायां टीकायामपि । इदञ्च नाम कौण्डिन्यकृतायां पाशुपत-सूत्रटीकायां प्रथमसूत्रव्याख्यानावसरे 'कुशिक' इति किञ्चित्परिवर्तितरूपेणोपलभ्यते ।

एभिः प्रमाणैरिदं निश्चीयते—कौशिको लकुलीशस्य प्रथमः शिष्य आसीत् । उदिताचार्यः, यस्य नाम मथुरास्तम्भलेखे उत्कीर्णम्, कौशिकाद्दशमोऽभूत् । अयञ्च शिलालेखोऽशीत्यधिक-त्रिशततमे ईशवीयवर्षे समुत्कीर्णः । एवञ्च यदि प्रत्येकं गुरोः काल आधुनिकेतिहासज्ञमतानुसारं पञ्चविंशतिवर्षपरिमितः स्वीक्रियेत, तर्हि उदिताचार्यस्य पूर्वगुरुपरम्परायामेकादशो लकुलीश ईशवीयचतुर्थशतकान्त्यचतुर्थभागभवादुदिताचार्यात् पञ्चाशदधिकद्विशतवर्षात् प्राक् तथा च ईशवीयद्वितीयशतकप्रथमार्धेऽभूदिति नूनमभ्युपेयम् ।

अतो लकुलीशोत्थापितस्य शैवद्वैताद्वैतप्रतिपादकस्य लकुलीशपाशुपतदर्शनस्योद्गम ईश-वीयद्वितीयशतके सञ्जात इत्यत्र न विवादावसरः ।

### लकुलीशपाशुपतदर्शनग्रन्थाः

लकुलीशपाशुपतदर्शनस्य संक्षिप्तं व्याख्यानं माधवकृते सर्वदर्शनसंग्रहे समुपलभ्यते, यत्र

व्याख्यायमानदर्शनस्य 'लकुलीशपाशुपतम्' इति नाम उपन्यस्यतो व्याख्याकर्तुर्मनसि पाशुपतलकुलीशपाशुपतयोर्भेदः सुस्पष्ट आसीदिति स्फुटं प्रतिभाति। एतद्दर्शनप्रतिपादका मुख्याः पूर्वोक्ता अष्टादश द्वैताद्वैतागमाः। अन्ये मुद्रिता अमुद्रिताः प्रमाणतयोपन्यासमात्रेण वा ज्ञाता इमे ग्रन्थाः—

**१. पाशुपतसूत्रं लकुलीशकृतम्।** लकुलीश ईशवीयद्वितीयशतके समभूदिति सविस्तरं निर्णीतमेव।

**२. पञ्चार्थभाष्यनाम्नी तट्टीका कौण्डिन्यविरचिता।** अस्य टीकाकर्तुर्नाम राशीकर इत्यप्यासीदिति सर्वदर्शनसंग्रहकर्तुर्वचनादेव गम्यते। यथाह—

"पञ्चानां पदार्थानां प्रमाणतः पञ्चाभिधानं विस्तरः। स खलु राशीकरभाष्ये द्रष्टव्यः" (स० द० सं० पृ०१७१) इति।

अयं राशीकरो वायुलिङ्गादिपुराणेषु राजशेखरकृतषड्दर्शनसमुच्चये च लकुलीशपाशुपतगुरुपरम्परागणनायां लकुलीशात् सप्तदश आसीदित्युल्लिखितम्। यथा—

तस्यावताराः सारा ये तेऽष्टादश तदर्चिताः।
राशीकरः सप्तदशो विद्यागुरुरथापरः॥ इति। (ग० का० पृ० ३५)

लकुलीशो ईशवीयद्वितीयशतके जीवति स्मेति निर्धारिते तस्य षोडशः शिष्यस्तस्माच्चतुःशतवर्षानन्तरं सञ्जात इत्याधुनिकैतिहासिकदृष्टिकोणान्निश्चिते स ईशवीयषष्ठशतके समभूदिति शक्यते वक्तुम्। अनेनान्येऽपि केचन ग्रन्था लिखिता इति गणकारिकाकर्तृवचनादेवावगम्यते। यथाह—

"श्रीमद्भाष्यकृतापि ज्ञापकमुक्तं तपोभिः" (ग० का० पृ० १३) इत्यादि।

इदं वाक्यं पाशुपतसूत्रभाष्ये नोपलभ्यते, अत इदं निश्चीयते यद् गणकारिकाटीकाकर्त्रा कश्चनान्यो ग्रन्थो दृष्टो यत्रेदं वाक्यमासीत्।

यद्यप्ययं बहूनि प्रमाणवाक्यान्युपन्यस्यति, तथापि प्रायस्तेषां ग्रन्थानां नामानि नोल्लिखति, येभ्यस्तानि संगृहीतानि। परम्—

"इत्येवमहिंसा तन्त्रे प्रसिद्धा" (पा० सू० पृ० १९),
"इत्येवमसंव्यवहारस्तन्त्रे सिद्धः" (पा० सू० पृ० २३),
"वेदप्रामाण्यादुक्तम्" (पा० सू० पृ० ११५)

इत्यादिवाक्येभ्यः स्पष्टीभवति यत् स शैवागमानां वेदानाञ्च प्रामाण्यं स्वीचकार।

**३-४ विशुद्धमुनिकृते यमप्रकरण-आत्मसमर्पणे ।** अयं विशुद्धमुनिः पाशुपतसूत्रटीकाकर्तुः कौण्डिन्यादपरभावीति निश्चीयते—

"भाष्यकृतोक्तं तद्वद्ये यमप्रकरणं तथा" ( ग० का० पृ० २४ )

इति तदीयवाक्यादेव । यतो मुद्रितपाशुपतसूत्रटीकायां भस्मप्रकरणानन्तरं पञ्चदशात् पृष्ठादारभ्य चतुस्त्रिंशत्पृष्ठान्तस्य टीकाग्रन्थभागस्य यमप्रकरण इति संज्ञा कौण्डिन्येन स्वयमेव कृतोपलभ्यते । कौण्डिन्यस्य समय ईशवीयषष्ठशतके निर्धारितः । अतः शक्यते इदं वक्तुं यद् विशुद्धमुनिरीशवीयसप्तमशतके तदनन्तरं वाऽभूत् ।

**५. हरदत्ताचार्यलिखिता गणकारिका**

**६. तदुपरि भासर्वज्ञकृता टीका च ।** अत्र विद्यते मतभेदः । सी०डी०दलालमहोदयः सटीकगणकारिकाभूमिकायाम्—"गणकारिका भासर्वज्ञेन कृता परं टीकाकारस्य नाम नोपलभ्यते" इति लिखितवान् । परं यदि सर्वदर्शनसंग्रहस्थलकुलीशपाशुपतदर्शनविवरणं सावधानमवलोक्यते तर्हीदं स्पष्टं सञ्जायते यद् गणकारिकाकारस्य नाम हरदत्ताचार्य इत्यासीत् । यतः षष्ठकारिकाया द्वितीयभागम्—

"ज्ञानं तपोऽथ नित्यत्वं स्थितिः सिद्धिश्च पञ्चमी"

इत्युद्धरता माधवेन कारिकाकारस्य नाम "तदाह हरदत्ताचार्यः" इत्युल्लिखितम् । परन्तु गणकारिकाटीकायाः समाप्तावेवं मुद्रिता पङ्क्तिः समुपलभ्यते—

"आचार्यभासर्वज्ञविरचितायां गणकारिकायां रत्नटीका समाप्ता" इति । अतो गणकारिकाकर्तृविषये सन्देहो जायते हरदत्ताचार्येण भासर्वज्ञेन वेयं विरचितेति । नोपलब्धमद्यावधि किमपि प्रमाणं दूरीकर्तुमिमं संशयम् ।

भासर्वज्ञकृतौ द्वौ ग्रन्थौ यौ गणकारिकाटीकायां स्वीयत्वेनोल्लिखितौ तयोर्नामनी सप्रमाणमिमे—

**७. सत्कार्यविचारः ।**

सत्कार्यविचारे चायं विस्तारितो मया, तेनेह न प्रतन्यते ( ग० का० पृ० १० ) ।

**८. टीकान्तरम् ।**

अनयोर्भेदष्टीकान्तरे मया दर्शित इति नेह प्रदर्श्यते ( ग० का० पृ० १० ) ।

इमौ ग्रन्थौ भासर्वज्ञकृतत्वेन शक्यस्वीकारौ, यदि गणकारिकाटीका भासर्वज्ञकृतेति स्वीक्रियते।

गणकारिकाटीकायां प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां नामानि सप्रमाणमिमानि—

**९. संस्कारकारिका।**

"तत्क्रमश्च संस्कारकारिकायां द्रष्टव्यः" (ग० का० पृ० ९)।

**१०. टीकाकाराः।**

"टीकाकारास्तु सर्वमापरितोषात् कर्तव्यमित्येवं प्रतिपन्नाः" (ग० का० पृ० १९)।

अस्मादिदं स्पष्टीभवति यदुपलभ्यमानटीकायाः पूर्वं बह्व्योऽन्याष्टीका गणकारिकाया आसन्।

## भासर्वज्ञस्य समयः

डा०सर्वपल्लीराधाकृष्णन्महोदयास्तथा श्रीसी०डी०दलालमहोदया भासर्वज्ञ इति नाम न्यायभूषणेतिनाम्न्या न्यायसारटीकाया लेखकस्य भावसर्वज्ञस्यैवापरं संक्षिप्तं नाम इति स्वीकृतवन्तः, वेरावलप्रशस्तौ अचलगन्धशिलालेखे च भावबृहस्पति-भावज्ञ-भावशङ्कर इति पाशुपताचार्यनाम्नामुपलभ्यमानत्वात्, गणकारिकायास्तट्टीकाया वा कर्तुः पाशुपताचार्यत्वाच्च। न्यायभूषणे च प्रमाणवार्त्तिकालङ्कारकर्तुरीशवीयदशमशतकपूर्वार्धभवस्य प्रज्ञाकरगुप्तस्य मतं निरस्तम्। अथ च रत्नकीर्तिः, दशमशतकापरार्धभवस्य रत्नाकरशान्तेर्गुरुः, स्वीयायामपोहसिद्धौ न्यायभूषणकारमतमित्थं समालोचितवान्—

"यच्चात्र न्यायभूषणे सूर्यादिग्रहणे तदुपकार्याशेषवस्तुराशिग्रहणप्रसञ्जनमुक्तं तदभिप्रायानवगाहनफलम्, तथाहि तन्मते धर्मधर्मिणोरभेद उपकारलक्षणैव च प्रत्यासत्तिः" (अ० सि० ११)।

अतो भासर्वज्ञो दशमशतकपूर्वार्धे समभूदिति तेषामभ्युपगमः।

परन्तु न्यायसारस्यैकस्यां बङ्गाल-एशियाटिक-सोसाइटीभवनस्थायां हस्तलिखितप्रतिलिप्याम्—"भासर्वज्ञविरचिते न्यायसारे" इत्युपलभ्यते। अस्य प्रामाणिकत्वं स्वीकृत्य न्यायसारो भासर्वज्ञकृत इति शक्यते वक्तुमुपेक्ष्यापि भासर्वज्ञ इति भावसर्वज्ञस्यापरं संक्षिप्तं नाम इति मतम्। एवञ्च भासर्वज्ञो भावसर्वज्ञाद् भिन्न इत्यस्मिन्नपि मते स्वीकृते स ईशवीयदशमशतकात् पूर्वभावीत्यायाति, यतो न्यायभूषणकर्ता दशमशतकपूर्वार्धभव इत्यत्र नास्ति विवादः। न्यायसारकर्ता भासर्वज्ञो गणकारिकाटीकाकर्तुर्भासर्वज्ञादभिन्न इति तु लकुलीशपाशुपतप्रतिपादितप्रमाणत्रयस्वीकारात्, प्रमाणान्तराणामुपमानादीनां निरासात्, इन्द्रियप्रत्यक्ष आत्मप्रत्यक्ष इति प्रत्यक्षद्वैविध्यस्य अयोगिप्रत्यक्ष-योगि-

प्रत्यक्ष-नामान्तराभ्यामुपादानात्, अनुमानविषये दृष्टसामान्यतोदृष्टरूपद्विप्रकारकत्वानुगमनात् स्पष्टमिव प्रतिभाति।

११. कारणपदार्थः।

अयमज्ञातग्रन्थकर्तृनामा ग्रन्थः सायुज्याभिधमोक्षचर्चां करोति, एतद्ग्रन्थकर्ता कुशिकादीन् नमस्करोति, शिवस्य भवादिनामविवरणे पाशुपतसूत्रमनुसरतीत्यतो लकुलीशपाशुपतदर्शनांशप्रदर्शनपरत्वमस्य निश्चीयते।

१२. पञ्चार्थभाष्यदीपिका।

इयं कौण्डिन्यकृतस्य पाशुपतसूत्रभाष्यस्य पञ्चार्थभाष्यनामकस्योपरि टीका केनाप्यज्ञातनाम्ना कृता आसीत्। इयञ्च माधवेनैवं प्रमाणत्वेनोपन्यस्ता—"तत्प्रपञ्चस्तु पञ्चार्थभाष्यदीपिकादौ द्रष्टव्यः" इति।

१३. आकरः।

१४. आदर्शः।

इमावपि ग्रन्थौ माधववचनाभ्यामेव ज्ञायेते। यथाह—

"शेषमाकर एवावगन्तव्यम्" इति,

"इत्यादर्शकारादिभिस्तीर्थकरैर्निरूपितम्" इति च।

बहुभ्योऽन्येभ्योऽपि ग्रन्थेभ्यः पञ्चार्थभाष्ये, गणकारिकाटीकायाम्, सर्वदर्शनसंग्रहे च प्रमाणवाक्यानि ग्रन्थकर्तृनामान्यनुल्लिख्यैव दत्तानि, अतोऽनुमीयते यदन्येऽपि बहवो ग्रन्था एतद्दर्शनप्रतिपादका आसन्।

एवञ्च ईशवीयद्वितीयशतकादारभ्य, यदा लकुलीशः समभूत्, चतुर्दशशतकपर्यन्तं यदाऽचलगन्धशिलालेखः समुत्कीर्णः, अस्य दर्शनस्य प्रचारो गुर्जरे मथुरायां दक्षिणभारते चाविच्छिन्न आसीदित्यत्र नास्ति सन्देहः। परं तदनन्तरमस्य दर्शनस्य बुद्धिमात्रवैभवानामुपेक्षिताध्यात्मविद्यांशानां हस्तेषु निपतनादेतद्दर्शनाश्रिता न्यायपरम्परैवावशिष्टा, याऽद्यापि प्रचलति, नष्टा चाध्यात्मविद्यानुसारिणी प्रतिपादनपरम्परा, यद्यपि सोमनाथमन्दिरमहत्त्वमधुनापि यथापूर्वमेवावतिष्ठते, भस्मस्नानादिचर्या च 'नागा' इति ख्यातैः साधुभिरद्याप्यनुष्ठीयते।

## लकुलीशपाशुपतदर्शनस्य वेदसंबन्धित्वम्

लकुलीशपाशुपतदर्शनस्य साधारणतः सर्वैर्वेदैर्विशेषतः कृष्णयजुर्वेदेन घनिष्ठः सम्बन्धः। तथ्यं त्विदं यत्सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशाना ये शिवसायुज्यप्राप्तये पाशुपतसूत्रे

क्रमशो ध्येयत्वेनोपदिष्टास्ते शिवस्यैव तैत्तिरीयारण्यकान्तभागोल्लिखिताः पञ्चांशा रूपाणि वा, यथाग्रे प्रतिपादयिष्यन्ते।

तैत्तिरीयारण्यकान्त्यप्रपाठकचतुष्टये एकोपनिषन्निबद्धा, यस्याः सांहिती वारुणी याज्ञिकीति त्रयो भागाः सन्ति। दशमप्रपाठकगतो याज्ञिकीति निर्दिष्टो भागो नारायणीयोपनिषन्नाम्ना सुप्रसिद्धः खिलकाण्डरूपश्च।

अत्र प्रतिपादितानां दार्शनिकसिद्धान्तानां लकुलीशकृतपाशुपतसूत्रप्रतिपादितैः सिद्धान्तैस्तावत्साम्यम्, यस्मादिदं स्पष्टीभवति यल्लकुलीशो नारायणीयोपनिषन्निबद्धां दार्शनिकसिद्धान्तपरम्परामनुसरति स्म। यथा—उभयत्र ब्रह्मणः शक्तिस्ततोऽपृथग्भूता स्वीक्रियते। उभावपि ब्रह्म सगुणं कथयतः, एवञ्च द्वैताद्वैतं प्रतिपादयतः। तैत्तिरीयारण्यकस्य दशमः प्रपाठको नारायणीयोपनिषन्नाम्ना सुप्रसिद्धो द्वैताद्वैतं समर्थयतीति मतं विशिष्टाद्वैतसाधकैः शैवैः प्रमाणत्वेनोपगृहीतत्वाद्वैष्णवैश्चास्य विशिष्टाद्वैतपरतया व्याख्यातत्वाच्छक्यसमर्थनम्।

लकुलीशपाशुपतदार्शनिकसिद्धान्तपरम्परा न केवलं तैत्तिरीयारण्यकखिलभागे समुपलभ्यते, अपि तु मूलपुस्तकेऽपि त्रिचत्वारिंशदनुवाकादारभ्य सप्तचत्वारिंशानुवाकपर्यन्तभागे। पञ्चमन्त्राः—

"सद्योजातं प्रपद्यामि"

"वामदेवाय नमः"

"अघोरेभ्योऽथ घोरेभ्यः"

"तत्पुरुषाय विद्महे"

"ईशानः सर्वविद्यानाम्"

इति प्रतीका ये लकुलीशेन किञ्चित्परिवर्त्य शिवसायुज्याभीप्सुभिः क्रमेण ध्येयत्वेनोपदिश्यमानानां शिवापरपर्य्यायस्य ब्रह्मणः पञ्चरूपाणां प्रतिपादनायोपात्तास्त उभयत्रोपलभ्यन्ते। इमे पञ्च मन्त्राः पाशुपतसूत्रस्य पञ्चस्वध्यायेषु विभजनस्याधारभूताः।

गणकारिकाप्रतिपादिताष्टपञ्चकविचारधाराप्येतन्मन्त्रपञ्चकप्रभावितेति प्रतिभाति।

## सायणीयतैत्तिरीयारण्यकटीकाप्रतिपादितस्य ब्रह्मणो लकुलीशपाशुपतदर्शनप्रथमतत्त्वेन पत्या सह साम्यम्।

लकुलीशपाशुपतदर्शनोत्थानसमये ब्रह्मशब्दः केवलमद्वैतवेदान्ताभ्युपगतपरतत्त्वस्यैव

वाचको नासीदिति पाशुपतसूत्रे तत्र तत्र तासु तासु भूमिकासु ध्येयतत्त्वार्थेऽस्य शब्दस्य प्रयुज्यमानत्वादवगम्यते।

"अत्रेदं ब्रह्म जपेत्"

इति सूत्रं पञ्चस्वप्यध्यायेषूपलभ्यते।

इदं स्मरन्तो वयं यदि नारायणीयोपनिषदः सायणकृतं भाष्यमवलोकयामस्तर्हीदं सुस्पष्टं भवति यत्सायणो ब्रह्मविषये वक्ति तत्तेन सहातीव साम्यं भजते यल्लकुलीशदर्शनप्रतिपादयितारः पतिनाम्नः प्रथमतत्त्वस्य विषये कथयन्ति। यथा—

(क) ब्रह्म जगत्कारणम्। इदमुपादानकारणम्, यतो मायाऽस्य शक्तिर्नास्मात् स्वातन्त्र्येण सत्तां भजत्यपि तु तस्यैव विशेषणरूपेण। अत इदं मायि मायाविशिष्टं चोच्यते—

"मायां तु प्रकृतिं विद्याद् मायिनन्तु महेश्वरम्"

(तै० आ० ५६४)

"योऽयमाकाशो मायाविशिष्टब्रह्मण उपादानकारणादुत्पन्नः"

(तै० आ० ५६६)

(ख) यथा ब्रह्मतत्त्वस्य सच्चिदानन्दैकरसत्वं स्वभावस्तथा मायाविशिष्टस्य सृष्टि-स्थिति-संहाराः। (तै० आ० ५७१)

(ग) न प्रभवन्ति कर्माणि स्वातन्त्र्येण कृतकर्मफलं दातुम्। ईश्वर एव कर्मफलदाता।

(घ) न कारणाद्बहिः कार्यसत्ता संभवतीत्यतो ब्रह्म सर्वव्यापकमनन्तञ्च।

(ङ) ब्रह्म सत्। इदं जगत्सृष्ट्वा तदनुप्रविशति। तदनुप्रविश्य सच्च त्यच्च, निरुक्तञ्चानिरुक्तञ्च, निलयञ्चानिलयञ्च, विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च भवति।

(च) ब्रह्म सुकृतम्, सुशब्दोऽत्र स्वयंशब्दपर्यायः कृतशब्दश्च कर्तृशब्दपर्यायः। अतः स्वयं कर्तृ स्वतन्त्रं ब्रह्म।

(छ) मुक्तिर्जीवस्य ब्रह्मणि प्रतिष्ठा, स्वात्मबुद्धिदार्ढ्यम्, स्वात्मब्रह्मणोरभेदानुभवः।

(ज) जीवगतानन्दस्य ब्रह्मानन्देनाभेदं विद्वान् ब्रह्म उपसंक्रामति। संक्रमणं नाम दृढसंयोगरूपप्राप्तिः।

"जलूका तृणे संक्रामति" (तै० आ० ६५२) इत्यादौ तथा दृष्टत्वात्।

जलूकादृष्टान्तेनेदं ध्वन्यते—यथा जलूका स्वस्थानमपरित्यजन्त्येव तृणं संक्रामति, तथा पशुरपि पशुत्वं सर्वथाऽपरित्यजन्नेव ब्रह्मसायुज्यमेति। मुक्तिश्च जीवे ब्रह्मशक्तिप्रवेशः, यस्माद् ब्रह्मशक्तयस्तथैव पशुमनुप्रविशन्ति यथा संलग्नजलौकाद्व्यक्तिविशेषकायाज्जलौकाकाये रुधिरम्।

( झ ) मुक्तिः सालोक्यसामीप्यादिक्रमेण सत्यज्ञानानन्तादिलक्षणब्रह्ममहत्त्वावाप्तिः।

( ञ ) द्वैताद्वैतदर्शनं भेदाऽभेदापरपर्यायं परस्परविरुद्धभेदाभेदप्रतिपादकत्वादन्याय्यमिति न शक्यते वक्तुम्, ब्रह्माकारेणाद्वैतं भोक्तृ-भोग्याकारेण द्वैतमित्याकारभेदाद् व्यवस्थासिद्धिस्वीकृत्या बाधाभावस्य शक्यसमर्थनत्वात्।

( ट ) सायणः 'सद्योजातम्' इत्यादिपञ्चतैत्तिरीयारण्यकमन्त्रान्न केवलं शैवदर्शनपरतया अपि तु शैवधर्मपरतयापि व्याचष्टे। स मनुते यत् ते मन्त्राः पञ्चवक्त्रशिवमूर्तिवर्णनपराः। सद्योजातनामकं पश्चिमवक्त्रम्, उत्तरवक्त्ररूपो वामदेवः, तस्यैव विग्रहविशेषा ज्येष्ठादिनामकाः, अघोरनामको दक्षिणवक्त्ररूपः, प्राग्वक्त्रदेवस्तत्पुरुषनामकः, योऽयमूर्ध्ववक्त्रो देवः सोऽयं सर्वविद्यानां वेदशास्त्रादीनां चतुःषष्टिकलाविद्यानामीशानो नियामकः। ( तै० आ० ७३३-५५ )

( ठ ) पत्युः शक्तिस्ततोऽपृथग्भूता, पतिर्जगत्कारणं स्वतन्त्रश्च। योगश्च निष्ठा-सामीप्य-सायुज्य-भेदभिन्नः। सायुज्ये पतिशक्तयः पशौ संक्रामन्तीत्यादयो लकुलीशसिद्धान्ता अग्रे व्याख्यास्यन्ते। एवं द्वैताद्वैतपाशुपतदर्शनस्य वैदिकपरम्परागतत्वं सिध्यति।

## लकुलीशपाशुपतदर्शनस्य दर्शनान्तरेभ्यो वैशिष्ट्यम्

पाशुपत-लकुलीशपाशुपतयोर्भेदः, पाशुपतदर्शनस्य च दर्शनान्तरेभ्यो भेदः, केषुचिदंशेषु प्राङ्निरूपितोऽपि श्रोतृस्मारणाय तदंशसंग्रहपूर्वकं लकुलीशपाशुपतदर्शनस्य दर्शनान्तरेभ्यो भेद इह यथासंभवं सविस्तरं निरूप्यते।

( १ ) मोक्ष एतन्नये न्यायमते इव न दुःखान्तमात्ररूपः, अपि तु सदुःखान्ता सर्वज्ञत्व-सर्वकर्तृत्वाधिगमरूपपारमैश्वर्यावाप्तिः।

( २ ) कार्यमेतन्नये कारणे सदेवोत्पद्यते, नाऽसद्यथा वैशेषिकनये। इदं वैशेषिकाभ्युपगताऽसत्कार्यवादाद्भिन्नं सत्कार्यवादमवलम्बते। एवञ्च विद्याकलापशुरूपं कार्यजातमस्मिन् दर्शने नित्यम्।

( ३ ) ईश्वर एतन्नये सर्जने स्वतन्त्रो न तु न्यायवैशेषिकनय इव परमाणुकर्मपरतन्त्रः।

( ४ ) अन्यत्र विधीयमानो विधिरनुष्ठातॄन् स्वर्गं नयति, यस्माद्विध्यनुष्ठानजन्ये पुण्ये क्षयं

गते सति भूयो मृत्युलोकं परावर्तते जीवः। परं लकुलीशपाशुपतविधिः शिवसामीप्यं नयति, यस्मान्न भूयः परिवर्तिसंसारागमनम्।

(५) इदं रामानुजानन्दतीर्थादिभिस्तत्पूर्वभाविभिराचार्यैश्च स्वीकृतं मोक्षस्य दासत्वरूपत्वं निराकरोति। यतः कस्यापि सर्वशक्तिमतोऽपि दास्यं न दुःखान्तरूपमपि तु दुःखरूपमेव। अत एवेदं पारमैश्वर्यावाप्तिरूपत्वमभ्युपगच्छति मोक्षस्य।

(६) द्वैतपाशुपतदर्शनादिदं भिन्नम्, यतः पूर्वं सर्जने कर्मपरतन्त्रत्वं पत्युरुररीकरोति, इदं तु ततोऽपि स्वातन्त्र्यम्।

(७) एतन्नये सर्वज्ञत्वसर्वकर्तृत्वशक्ती पत्युः पशुं संक्रामतः। ते न स्वाभाविक्यौ पशौ, परन्तु द्वैतपाशुपतदर्शनानुसारमिमे पशौ स्वाभाविक्यौ। एवञ्च मलतिरोहिते ते मलापगमेऽभिव्यक्ते भवतः।

(८) पाशुपतदर्शने कर्मसापेक्षः पतिर्जगत्कारणम्, इह तु—

कर्मादिनिरपेक्षस्तु स्वेच्छाचारी यतो ह्ययम्।
ततः कारणतः शास्त्रे सर्वकारणकारणम्॥

इति मतमवलम्ब्यते।

## लकुलीशपाशुपतदर्शनस्य युक्तिवादसहकृतः स्वातन्त्र्यवादः

लकुलीशपाशुपतदर्शने पतिः स्वतन्त्रः। स जगत्सर्जने न कमपि परमाश्रित्य प्रवर्तते। उपादानकारणं न तस्मात् स्वातन्त्र्येण बहिरास्ते। तदपि तस्मिन्नेव शक्तिरूपेण वर्तते। नापि सृष्टिक्रियायां स कर्मपरतन्त्रः। यतः कर्मफलं तदधीनमेव। तत्प्रदत्तान्येव कर्मफलानि जीवा भुञ्जन्ति। यथोक्तम्—

स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता।
कर्तुः स्वातन्त्र्यमेतद्धि न कर्माद्यनपेक्षणम्॥ इति।

इयं विचारधारा—

"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्"

इति नैयायिकविचारधारासमैव। परन्तु पत्युः सर्जनव्यापारः सदा कार्यकारणभावानुसार्येव स कस्यापि वस्तुनः स्वरूपलक्षणं नापि कार्यकारणभावक्रममन्यथा करोति।

"मुक्तानां पुनर्दुःखैरसंयोजनम्"

इत्येतां कारणमर्यादां नातिवर्तते। लकुलीशपाशुपताभ्युपगतस्य स्वातन्त्र्यवादस्य युक्तिसहकृतत्वं पत्युः कारणापरपर्यायत्वस्वीकरणेनैव द्योत्यते।

अयं स्वातन्त्र्यवादोऽद्वैतकाश्मीरशैवाभ्युपगतस्वातन्त्र्यवादाद् भिन्नः। अयं कार्यकारणभावमनुल्लङ्घ्यमव्यभिचारिणञ्च मनुते। अत एवायं विद्याकलापशुरूपाणां कार्याणामङ्कुरस्येव बीजे पत्यौ सद्भावमङ्गीकरोति।

लकुलीशपाशुपतदर्शनं नाध्यात्मवादः ( Idealism )। इदं जगदुपादानकारणस्यात्मरूपत्वं चेतनाऽचेतनयोर्वा पारमार्थिकमैक्यं ब्रह्मरूपत्वं चिद्रूपत्वं वा न स्वीकरोति। एतन्मते आत्मानात्मनोः, कार्यकारणयोः, जडचेतनयोर्भेदस्तात्त्विकः। तथाप्यनात्मनः पत्यौ, कार्यस्य कारणे, अचेतनस्य परिमितप्रमातुः पशोश्च 'कार्यस्य' पत्यभिन्नायां शक्तौ सद्भावाभ्युपगमान्नेदमभेदवादि, अपि तु भेदाभेदवादि; यत इदं कार्यकारणादीनां पारस्परिकं तात्त्विकं भेदं स्वीकुर्वदपि कार्यस्य पत्युर्बहिः स्वातन्त्र्येणावस्थानं नाभ्युपगच्छति, अपि तु तदन्तर्गतत्वं हार्य-धार्य-कार्यत्वेन पत्यपेक्षया गौणताञ्च प्रतिपादयति। इदं सगुणब्रह्मवादि।

लकुलीशदर्शनं निर्गुणब्रह्माभ्युपगमोन्मुखमिव प्रतीयते। "वाग्विशुद्धः" (पा० सू० १२७) इति सूत्रस्य व्याख्यां कुर्वाणः कौण्डिन्यो यद्यपि "हित्वा वाणीं मनसा सह रूपरसगन्धविद्यापुरुषादिपरो निष्कलो ध्येयः" इति कथयन् 'वाग्विशुद्धः' इत्यस्य विद्याकलापशुरूपावान्तरतत्त्वोत्तीर्णः शिवो ध्येय इत्येवार्थं प्रतिपादयति, तथापि गणकारिकायाम्—

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"

इत्यौपनिषदवाक्यप्रभावित इव टीकाकारः 'वाग्विशुद्धः' इत्येवं व्याचख्यौ—

"गुणधर्मद्वारेण वाचः प्रवर्तन्ते यस्मादतस्तद्व्यतिरिक्तस्तदविशेषितश्च भगवान् विशुद्ध इत्युच्यते। यथाह—

नित्यानागन्तुकैश्वर्ययुक्ते परमकारणे।
यत्र वाचो निवर्तन्ते वाग्विशुद्धः स कीर्तितः।
क्षणैकमपि यस्तत्र प्राप्नोत्येकाग्रतां यतिः।
स दग्ध्वा सर्वकर्माणि शिवसायुज्यमाप्नुयात्॥ इति।

( ग० का० ११ )

तथा—

तद्वद्वागाद्यसंस्पृष्टं शिवं ध्यायेदनालसः॥

विवक्षोर्वाग्विशुद्धः प्राग् यद्वच्चेतसि भासते ।
तद्वत्तं प्रणिधानेन दिवा रात्रौ च चिन्तयेत् ॥
(ग० का० २१)

एवं गुणधर्मव्यतिरिक्ते तदविशेषिते च पत्यौ प्रणिधानोपदेशाज्जगत्कारणत्वेन सगुणत्वे स्वीकृतेऽपि प्रणिधेयत्वेन ब्रह्मापराभिधस्य पत्युर्निर्गुणत्वमपि स्वीकृतमिति स्पष्टीभवति । अतीव गहनोऽयं विषयः समधिकमन्वेषणं विवेचनं चापेक्षते ।

## लकुलीशपाशुपतदर्शनस्वीकृताः पञ्च पदार्थाः

यद्यपि द्वैताद्वैतलकुलीशपाशुपतदर्शनस्वीकृताः पञ्च पदार्था द्वैतपाशुपतोपात्तैरेव नामभिः परिगणिताः, तथापि तद्वाच्येषु महान् भेदः ।

**(१) पतिः कारणं वा ।**

पतिः कारणापरपर्यायः, असङ्खिन्नसत्त्वरूपः, आद्यः, अनन्तः, नित्यश्च । परमस्य नित्यत्वं मोक्षसंबन्धिनित्यत्वाद् भिन्नम्; यतोऽस्मिन्नये नित्यत्वं द्विविधम्—(क) अनाद्यनन्तम्, (ख) साद्यनन्तञ्च । पत्युर्नित्यत्वं प्रथमप्रकारकम् । मोक्षस्य नित्यत्वं द्वितीयप्रकारकम् । अयमकारणकं कारणम्, असंसारी, तैत्तिरीयारण्यकोपलब्धसद्योजातादिशब्दवाच्यः, त्रिविधस्यापि कार्यस्य व्याख्यास्यमानविद्याकलापशुरूपस्य कारणम्, समस्तस्यापि भुवनजातस्य समवायिकारणं निमित्तकारणं च । सर्वोऽपि भवस्तस्माद्बीजादङ्कुर इवोद्भवतीति भवोद्भवः । स्थितिध्वंसानुग्रहरूपक्रीडाकर्तृत्वात् क्रीडाशीलो देवः, सिद्ध-साधक-पशुभ्यः परत्वाज्ज्येष्ठः । अकृतकैश्वर्यवत्त्वाच्छ्रेष्ठः । यथोक्तम्—

दृक्क्रियालक्षणा शक्तिस्तत्त्वधर्मोऽस्य नित्यता ।
श्रेष्ठोऽतः सर्वभूतेषु तस्मादेष परः स्मृतः ॥ इति ।

पशुष्वधर्मभयोत्पादकत्वात् कृतकर्मफलदातृत्वाद् रुद्रः । यथोक्तम्—

नानाविधैः कृतैर्यस्माद् भयैश्च विविधैस्तथा ।
संयोजयति भूतानि तस्माद् रुद्र इति स्मृतः ॥ इति ॥

सर्वस्यापि चराचरस्य जगतः कलनात् कालः । यथोक्तम्—

ब्रह्मादिभूर्जपर्यन्तं जगदेतचराचरम् ।
यतः कलयते रुद्रः कालरूपो ततः स्मृतः ॥ इति ।

उदधिमन्थने साधारण्यास्तरङ्गाकाराया वृत्तेर्निरोधवद् धर्मज्ञानैश्वर्यादिवलवृत्तिनिरोधकत्वाद् बलप्रमथनः। सिद्धेश्वरवर्जं सर्वभूतानां स्थानशरीरेन्द्रियविषयादिषु रत्याधिक्यजनकत्वात् सर्वभूतदमनः। कलाकार्येभ्योऽन्तःकरणबहिष्करणेभ्यः सूक्ष्म-स्थूल-भूतेभ्यश्च मनःशब्दगृहीतेभ्यो रहितत्वान्निष्कलोऽमन इत्यादिशब्दैः सद्योजातादिमन्त्रेषु तदनुसारिषु पाशुपतसूत्रेषु निरूपितरूपः प्रथमः पदार्थः पतिशब्दवाच्यः।

पतिरेकोऽप्यनेकगुणत्वाद् विविधकृत्यकारित्वाद् घोर-अघोर-घोरतरादिपरस्परविरुद्धरूपत्वाच्च अनेकोऽपि। एवञ्च एकानेकाश्रयायाः क्रियायाः, बहुद्रव्यसंयोगिनः पानकरसस्य वैकल्यवदेकत्वमस्याभ्युपगम्यते।

(२) कार्यं पशुर्वा

द्वितीयो मुख्यपदार्थः कार्यं पशुर्वा कथ्यते। कार्यशब्दार्थो लकुलीशपाशुपतदर्शने दर्शनान्तरस्वीकृतेभ्य एतच्छन्दार्थेभ्योऽतीव भिन्नः। कार्यं न प्रकृतिविरुद्धविकृतिस्वरूपं सांख्यनय इव। यत एतन्नये न केवलं तत्सर्वं यत्सांख्यैर्विकृतिरूपमभ्युपगम्यते, अपि तु प्रकृतिविकृत्युभयविलक्षणः सांख्यसम्मतः पुरुषोऽपि कार्यान्तर्गत एव। इदं प्रकृतेर्महान् महतोऽहंकार इत्यादिस्वरूपसांख्यपरिणामवादाद्भिन्नं स्थूलीभवनवादं प्रतिपादयति, यदनुसारं सूक्ष्मतया पतिशक्तौ विद्यमानानि महदादीनि स्थूलीभवन्ति, संयोज्यन्ते च तैस्तैर्वस्तुरूपैरीश्वरेच्छया।

नापीदं बाह्यपदार्थानां परमात्मनः प्रत्ययमात्ररूपत्वं (Mere idea) प्रत्ययवादिकाश्मीरिक-स्वातन्त्र्यवादवत् (Idealistic Voluntarism) समभ्युपगच्छति। लकुलीशपाशुपतदर्शनं जडचेतनयोः पतिशक्तौ सूक्ष्मरूपेण सतोरपि पारस्परिकं भेदं मनुते। नापि कार्यजातं सर्वं भ्रान्तिस्वरूपं यथाऽद्वैतवेदान्तिनये, यतो लाकुलीशं दर्शनं नाद्वयवादोऽपि तु द्वैताद्वैतवादः। इदं परतत्त्वं नैकरूपम्, अपि त्वेकानेकरूपं प्रतिपादयति। एवं चैतन्नये बहुत्वमेकस्मिन् परतत्त्वेऽन्तर्गतं नभसीव ताराः। नापि कार्यमुत्पत्तेः प्रागसद्रूपमेवं चानित्यं यथा न्यायवैशेषिकसिद्धान्ते। एतन्नये पदार्थरूपं कार्यं नित्यं सद्रूपञ्च।

लकुलीशदर्शनं पशुस्वरूपाभ्युपगमे पतिस्वरूपप्रभावितमिव, पत्युः कारणापरपर्यायत्वस्वीकारे चोत्थानानन्तरभावि-दार्शनिकविचारधारापरिवर्धनप्रभावितमिव च भाति। अस्य मतस्य परिपोषः पाशुपतसूत्रप्रथमसूत्रे पति-पशुशब्दमात्रप्रयोगेण, कारणकार्यशब्दाऽप्रयोगेण च समर्थ्यते। प्रथमं पशुशब्दार्थः पाशनात् पशुरित्येवोपलभ्यते। अतश्च कार्यशब्दस्य द्वितीयमुख्यतत्त्ववाचकस्य वाच्योऽर्थो नायम्—

"यज्जन्यते, उत्पाद्यते, यस्य चोत्पत्तेः प्राग् अभावः" इति,

अपि तु—

"यदीश्वरेच्छापरतन्त्रं अस्वतन्त्रमेवञ्च स्वतन्त्रात् पत्युस्तच्छक्तिस्थितत्वान्न सर्वथा भिन्नम्" इति।

पशुः पतिं सार्थकयति। पतिः पालकः। न चासति पाल्ये पतिशब्दस्य पालकापरपर्यायस्य संभवति सार्थक्यम्। कार्यशब्दवाच्यद्वितीयमुख्यपदार्थान्तर्गतास्त्रयोऽवान्तरपदार्थाः—(क) पशुगुणस्वरूपा विद्या, (ख) जडतत्त्व( Matter )रूपा कला, (ग) परिमितप्रमातृस्वरूपः पशुरिति।

**कारणकार्ययोः सम्बन्धः**

लकुलीशमते कार्यं विद्याकलापशुत्रिकं नित्यं पत्याववतिष्ठते, तत एव चोद्भवतीति पतिर्भवोद्भवः। सृष्टिरपि भवे विद्यमानानामेव वस्तूनां वृत्तिलाभमात्ररूपा। कार्यत्रयं पत्युः कारणस्य प्रधानगुणरूपायां धर्मरूपायां वा शक्तौ निलीनमास्ते। न चेत्थं कार्यकारणयोर्वृत्तिसंकरदोषो गोजाविमहिषीक्षीरवद् दीपादित्यप्रकाशनयनरश्मिवच्चाऽसाङ्कर्यस्य समर्थनात्। पतिः सर्वव्यापकः, परं कार्याणि परिच्छिन्नव्यापकत्वानि। एवञ्च पशुः पुरुषो वा चतुर्विंशतितत्त्वानि कलादिपृथिव्यन्तानि व्याप्नोति। कला, येह सांख्यसम्मतप्रधानापरपर्यायत्वेनेव स्वीकृता प्रतिभाति, महदारभ्य तत्त्वत्रयोविंशतिकम्, एवमेव चाहङ्कारादि तदनन्तरपरिगणितं तत्त्वजातं व्याप्नोति। अतोऽस्मिन्दर्शने भिन्नानि कार्याणि माक्षिककोटद्रव्यवन्न पृथक्सत्ताकानि, अपि तूक्तप्रकारेणोत्तरोत्तरं तत्त्वं क्रमशोऽधराधरं व्याप्नोति। व्याप्यव्यापकौ पारस्परिकवैविक्त्येन प्रतीयेते, हरिद्रोदकवत्। यथा हरिद्रारञ्जिते जले शीतस्पर्शसांसिद्धिकद्रवत्वप्रतीतिरूपतया जलस्य प्रतीतिस्तथा गन्धवर्णघनक्षारत्वादिभिर्हरिद्रायाः।

अतः कार्यकारणे सहैव वर्तेते, परं परस्परतः पृथक्सत्तां भजेते, स्वरूपभेदात्; यद्यप्युभे अप्युक्तप्रकारेण व्यापके। यतः कार्याभावे कारणं कारणमिति वक्तुं न युक्तिवादसंगतम्, नापि पाल्याभावे पतिः पतिरिति। कारणे कार्यं भूमाविव बीजं पृथक्स्थिति। कारणं स्वतन्त्रं कार्यं चास्वतन्त्रम्। पूर्वः पतिरपरः पशुः। पूर्वश्चिद्रूपोऽपरश्चिदचिदुभयरूपः।

(क) विद्या

त्रिषु कार्यावान्तरतत्त्वेषु विद्या प्रथमा। इयं पशुगुणरूपा। लाकुलीशानां ज्ञानमीमांसा प्रमाणमीमांसा कर्तव्यमीमांसा चैनामेवाश्रित्य प्रवर्तन्ते। इयं चेतना, स्वप्रकाशा, बाह्यविषयप्रकाशयित्री, पुरुषगुणतया पुरुषं जडरूपायाः कलाया विभेदयति।

इयं विध्यनुष्ठानजन्यः प्रथमो लाभ इत्यप्यभ्युपगता ।

प्रथमलाभरूपा चेयं ज्ञानमित्युच्यते ।

आगमरहस्यार्थद्योतिका मलानां तदपनयनोपायानाञ्च तात्त्विकस्वरूपाणि वेदयति, नयति च लाभान्तरं प्रति सति मलापगमे ।

पत्यादिपञ्चपदार्थविषयकं समासविस्तरविभागविशेषोपसंहारनिगमनतस्तत्त्वज्ञानमस्याः स्वरूपम्, अतश्चेयं प्रमाणाभासजमिथ्याज्ञानविरोधिनी । ( ग० का० पृ० ९ )

एष विद्याशब्दः प्रकरणानुसारम्—( १ ) पशुगुणार्थे, ( २ ) तद्द्वारेणोपात्तज्ञानार्थे, ( ३ ) गुरूपदेशजनितोपादेयतत्त्वज्ञानार्थे, ( ४ ) प्रथमलाभार्थे च प्रयुज्यते ।

इयं विद्या पशोरुपाधित्वेन गुणत्वेन विशेषणत्वेन च वर्ण्यते । इयं प्राधान्येन ( १ ) बोधस्वभावा, ( २ ) अबोधस्वभावा चेति द्विविधा । बोधस्वभावा ( १ ) विवेकप्रवृत्ति ( २ ) सामान्यप्रवृत्त्यपरपर्यायाऽविवेकप्रवृत्तिरूपाभ्यां द्विधा । अबोधस्वभावा तु ( १ ) धर्म ( २ ) अधर्म ( ३ ) संस्काररूपैस्त्रिधा । इमे विद्याविभागा विभिन्नासु परिस्थितिषु प्रतिक्षिप्तस्य पशोर्विभिन्नानि विद्यारूपगुणकर्माणि द्योतयन्ति । धार्मिकपरिस्थितौ गुरूपदेशं भक्तिश्रद्धाध्यानपूर्वकं शृण्वतो गुरूपदिष्टपरतत्त्वज्ञानरूपेण परिस्फुरन्ती बोधस्वभावविद्यान्तर्गता विवेकप्रवृत्तिरित्युच्यते ।

चित्स्वरूपा विद्या सर्वदा स्वप्रकाशा । परप्रकाशकत्वं चास्याः कादाचित्कम् । यदेयं विषयं प्रकाशयति तदा बोधस्वभावेत्युच्यते । विषयमप्रकाशयन्ती स्वप्रकाशमात्रा चेयमबोधस्वभावा । कृतकर्मफलरूपौ धर्माधर्मौ स्वान्तर्भावयन्त्यबोधस्वभावा विद्या लाकुलीशकर्तव्यमीमांसाया आधारभूता । धर्माधर्मयोरबोधस्वभावविद्यान्तर्भावनं द्योतयति यद्धर्माधर्मौ स्वप्रकाशौ, पुरुषस्तौ प्रकाशान्तरनिरपेक्षं स्वात्मानमिव वेत्ति, न च शक्नोत्यात्मानं चिन्तयितुं स्वगुणभूताभ्यां ताभ्यां विना ।

अबोधस्वभावविद्यायास्तृतीयो विभागः संस्कारशब्दवाच्यः । अयं न कृतकर्मणां फलस्वरूपोऽपि तु ज्ञातानां विषयाणाम् । लाकुलीशज्ञानमीमांसेममेवाश्रित्य प्रवर्तते । अयं स्मरणकारत्वात् सविकल्पज्ञानकारणेष्वेकः, यतः स्मर्यमाणाऽभिधानसम्बन्ध एवाऽविकल्पं सविकल्पीकरोति ।

बोधस्वभावविद्याया विवेकप्रवृत्तिरूपो विभागः प्राग् विवेचितः । सामान्यप्रवृत्त्यपरपर्यायाविवेकप्रवृत्तिरूपो द्वितीयो विभागो लाकुलीशदर्शने प्रत्यक्षज्ञानस्य साधनं चित्तमित्युच्यते । ( ग० का० पृ० १० )

परन्तु चित्तं नान्तःकरणेष्वेकं यथा वेदान्तनये। इदं पुरुषगुणभूताया बोधस्वरूपविद्याया व्यापाररूपम्।

व्यापारश्च स्वप्रकाशायाः परप्रकाशिकायाश्च विद्यायाः परप्रकाशनाय प्रकाशप्रसररूपः। अयं विषयं प्रदीपवत् प्रकाशयति। एवं विषये प्रकाशितेऽन्तःकरणबहिष्करणेषु यथायथं व्यापृतेषु प्रत्यक्षज्ञानं जायते।

प्रत्यक्षं निर्विकल्पसविकल्पभेदाद् द्विविधम्।

**त्रीणि प्रमाणानि**

इह प्रत्यक्षानुमानागमाख्यानि त्रीण्येव प्रमाणानि। अर्थापत्ति-सम्भव-ऐतिह्याभावादीनि दर्शनान्तरस्वीकृतानि त्रिष्वेवान्तर्भवन्ति।

१. प्रत्यक्षं द्विविधम्—(क) इन्द्रियप्रत्यक्षम्, (ख) आत्मप्रत्यक्षम्। पूर्वमिन्द्रियार्थ-सम्बन्धव्यञ्जकसामग्र्यं धर्माधर्मप्रकाशदेशकालचोदनाद्यनुगृहीतं सत् प्रमाणम्। अपरन्तु चित्ता-न्तःकरणसम्बन्धसामग्र्यम्। (पा० सू० पृ० ७)

२. प्रत्यक्षपूर्वकमनुमानं द्विविधम्—(क) दृष्टम्, (ख) सामान्यतो दृष्टम्। पूर्वं द्विविधम्—(अ) पूर्ववत्, (आ) शेषवत्। पूर्वदृष्टोऽयं षडङ्गुलीयकः स एव, विषाणमात्र-दर्शनाद् गौरिति च क्रमशस्तयोरुदाहरणे। अपरं त्वेकप्रकारकमेव, येन गतिपूर्विकां मनुष्यपश्वादीनां देशान्तरप्राप्तिं प्रत्यक्षतोऽनुभूयाऽप्रत्यक्षाण्यादित्यगतिरनुमीयते।

आगमश्चाऽऽमहेश्वराद् गुरुपारम्पर्यागतं शास्त्रम्।

**(ख) कला**

कला कार्याख्यप्रधानतत्त्वान्तर्गतं द्वितीयं तत्त्वम्। इयं जडा। अस्याः सांख्याभ्युपगत-प्रधानापरपर्यायेण प्रकृतितत्त्वेन महत्साम्यम्। एतदन्तर्गतानि महदादिपृथिव्यन्तानि त्रयोविंशति-तत्त्वानि सांख्यसाधारणानि। द्वैतपाशुपतदर्शने चेयं कला प्रधानापरपर्यायत्वेन सम्मताऽऽसीदिति

"कार्यं प्राधानिकं महदादि"

इत्यादिवाक्यानां शाङ्करशारीरकभाष्ये तट्टीकासु चोपलभ्यमानत्वात् प्रतिभाति। इयं परिमितप्रमातुर्मानसशरीरोपाधिः (Psychophysical limitation) स्वयमचेतनापि चेतनाश्रिता। अस्याश्चेतनपारतन्त्र्यं सन्नद्धाश्वस्य रथस्य वाहकपारतन्त्र्यमिव।

इयं ( क ) कार्य-( ख ) करणरूपाभ्यां द्विविधा। कार्यरूपायां कलायां पृथिव्यादिपञ्च-भूतानि, गन्धादयश्च पञ्च भूतगुणा अन्तर्भवन्ति। करणे च पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि त्रीण्यन्तःकरणानि चान्तर्भवन्ति।

( ग ) पशुः

चेतनः प्रमाता पशुः कार्यान्तर्गतस्तृतीयोऽवान्तरपदार्थः। अयं कार्यान्तः परिगण्यते, यतोऽस्य विशिष्टा सत्तेश्वरकृता। परमिदं न विस्मरणीयं यत्र तत्र मुख्यतत्त्वपञ्चकान्तर्गतकार्य-रूपद्वितीयतत्त्वार्थमपि पशुशब्दः प्रयुज्यते। तत्रार्थभेदः प्रागेव निर्दिष्टः। सिद्धेश्वरवर्जं सर्वोऽपि चेतनः प्रमाता पशुः पाशितत्वादस्वातन्त्र्यात् कारणशक्तिनिरोधात् ( पा० सू० पृ० ५ )बाह्यविषया-श्रितत्वात्, व्यापकत्वेऽपि पाञ्चभौतिकशरीरेण स्वतादात्म्यीकरणात्, प्रलये शरीरसम्बन्धे विगते नवसृष्टौ शरीरग्रहणस्वातन्त्र्याभावात्, प्रवृत्तिनिवृत्तिस्थितीष्टानिष्टस्थानशरीरेन्द्रियविषयादिप्राप्ता-वीश्वरच्छन्दःपरत्वाच्च। अनादिपाशबद्धोऽयं कला-तदन्तर्गतत्रयोविंशतितत्त्वावच्छिन्नत्वात् परिमितः।

परिमितः प्रमाताऽचेतनकलासम्बन्धजनितावच्छेदव्यपगमेऽपि पारिमित्यं न जहाति, प्रलये स्थूलशरीरसंबन्धाऽभावे जातेऽपि नवसृष्टौ तस्य भूयोऽभिजननात्। अयं शरीरेन्द्रियादि-संघातरूपस्य क्षेत्रस्य ज्ञातेति क्षेत्रज्ञः। इच्छाद्वेषप्रयत्नसुखदुःखज्ञानैरनुमीयमानत्वादनुमेयः, बाह्यविषयान् स्वप्रकाशेन प्रकाश्य गृह्णाति।

पशुः पतिवत् सर्वव्यापकत्वेऽपि किञ्चिज्ज्ञत्वात् किञ्चित्कर्तृत्वाच्च सर्वज्ञात् सर्वशक्तिमतः पत्युर्भिन्नः। परमयं भेदः पशोः सांसारिकावस्थायामेव, सायुज्यरूपमोक्षस्य माहैश्वर्यावाप्तिरूप-त्वान्मुक्तः सदाशिव एवेति किञ्चिज्ज्ञत्वकिञ्चित्कर्तृत्वनिष्ठो भेदो मोक्षे व्यपगच्छत्येव।

पशुः प्राधान्येन द्विविधः—( १ ) साञ्जनः शरीरेन्द्रियादिसम्बन्धी। स च चतुर्दशविधः। यथोक्तम्—

> दैवमष्टविधं प्रोक्तं तैर्यग्योनं च पञ्चधा।
> पर्वमेकं तु मानुष्यमेतत्संसारमण्डलम्॥ इति।

२. निरञ्जनः शरीरेन्द्रियादिसम्बन्धरहितः। स च त्रिविधः—( क ) संहृतः प्रलयकालभावी पशुः, ( ख ) कैवल्यगतः पुरुषप्रकृत्योः पारस्परिकविविक्तत्वानुभवात् प्रकृतिवियुक्तः पशुः, ( ग ) निष्ठायोगयुक्तः शिवसायुज्यप्राप्त्या संक्रान्तसर्वज्ञत्वसर्वकर्तृत्वशक्तिः।

**पञ्च मलाः**

मिथ्याज्ञानमधर्मश्च सक्तिहेतुश्च्युतिस्तथा ।
पशुत्वमूलं पञ्चैते तन्त्रे हेयाधिकारतः ॥ ( ग० का० २२ )

इति वचनानुसारं पञ्च मलाः ।

१. संशयविपर्ययादिभेदभिन्नं प्रमाणाभासजं ज्ञानं स्वबीजेन सह मिथ्याज्ञानमित्युच्यते । व्याख्यास्यमानपञ्चावस्थान्तर्गताऽव्यक्तावस्थाऽऽगमे प्रत्यनीकरूपत्वान्मनःकालुष्यरूपाणां कामक्रोध-लोभमदमात्सर्यादीनां तुच्छभावानामज्ञानरूपत्वान्मिथ्याज्ञानान्तर्गतत्वमेव ।

२. वर्ज्यकर्मानुष्ठानं स्वविकारेण तत्फलसञ्चयरूपेण सहितमधर्मः ।

३. शास्त्रान्तरविहितकर्मानुष्ठानजन्येन सङ्करेण धर्मेण सहिता विषयासक्तिः सक्तिहेतुः । अयं परिमितप्रमातारं शरीरप्राणबुद्ध्यादिभिः स्वतादात्म्यं कर्तुं प्रवर्तयति ।

४. ध्यातृचित्तस्य ध्यानविषयाद् रुद्रतत्त्वादीषच्च्यवनस्य विषयं प्रति किञ्चिदौन्मुख्यमात्रस्य न तु विषयप्राप्तेः कारणं च्युतिः ।

इदमिहावधार्यम्—यथा मिथ्याज्ञानस्य प्रमाणाभासेन स्वबीजेन सह मलत्वम्, अधर्म-सङ्करयोः स्वस्वविकाराभ्यां क्रमशः पापसञ्चय-सङ्गाभ्यां सह मलत्वम्, तथा च्युतेरप्यधर्मा-ख्येन स्वबीजेनैव सह मलत्वम्, इमे मिथ्याज्ञानादयो न पुरुषस्य चित्तविग्रयोर्वा भावाः, अपि त्वधर्मविकारा एव । परं ज्ञानेच्छाभ्यां संमिश्रणात् क्षीरसंमिश्रितोदकवत्तदभिन्ना इव गृह्यन्ते ।

५. येन मलेन युक्तः पशुः पत्युर्विभिन्नः, यः कैवल्यगतानामन्यमलाभावेऽपि पुनः संसारा-पत्तिकारणम्, संसारस्य चानादिकारणम्, सर्वेषु च मलेषु मुख्यतमः स पशुत्वमूलमित्युच्यते । व्याख्यास्यमानचतुर्दशलक्षणोपेतश्चायम् । तानि च लक्षणानि अनात्मन्यात्मभावपरित्यागपूर्वकं महेश्वरैकात्म्यं भावयतस्तु ये गुणा उदयन्ति, ये च पाशुपतसूत्रप्रथमाध्याये "सर्वज्ञता" इति द्वाविंशतिसूत्रादारभ्य "सर्वत्र चाप्रतिहतगतिर्भवति" इति सप्तत्रिंशसूत्रपर्यन्तं परिगणिताः, तद्विपरीता असर्वज्ञत्वादयः ।

**( १-२ ) असर्वज्ञत्वम् असर्वकर्तृत्वं च**

इमौ गुणौ लाकुलीशाभ्युपगतं परिमितप्रमातारं सांख्यीयाद् विभेदयतः । सांख्यनये मुक्तिः कैवल्यस्वरूपा चेतनपुरुषस्य प्रकृतेः पृथक्स्थितिरेव । लाकुलीशदर्शने कैवल्यं न तात्त्विको मोक्षः ।

कैवल्येऽप्यसर्वज्ञत्वासर्वकर्तृत्वलक्षणस्य पशुत्वमलस्य संसृतिमूलकारणस्य सत्त्वात्, कैवल्यगताना-मन्यमलाभावेऽपि पशुत्वादेव पुनः संसारापत्तेश्च। परमो मोक्षस्तावन्न भवति यावन्न जायते शिव-सायुज्यम्, यस्मिन् सर्वज्ञत्वसर्वकर्तृत्वे शिवात् पशुं संक्रामतः।

( ३-१४ ) कृतसंहरणासामर्थ्यम्, करणकार्याभ्यां विना ज्ञानकर्माक्षमत्वरूपं सकरणत्वम्, अपतित्वम्, सर्वावेशाऽसामर्थ्यम्, सर्वावेश्यत्वम्, सर्वज्ञत्वाभावः, वध्यत्वम्, भीतत्वम्, क्षयित्वम्, जरित्वम्, मरणधर्मित्वम्, प्रतिहतगतित्वं चेति चतुर्दशपशुत्वगुणाः।

## पञ्चमलक्षपणोपाया लाभोपायाश्च

वासश्चर्या जपध्यानं सदारुद्रस्मृतिस्तथा।
प्रसादश्चैव लाभानामुपायाः पञ्च निश्चिताः॥ ( ग०का०पृ० ७ )

इति गणकारिकानुसारं यद्यपि [१]वास-[२]चर्या-[३]जपध्यान-[४]सदारुद्रस्मृति-[५]प्रसादरूपाः वक्ष्यमाणस्वरूपपञ्चलाभोपाया एव, तथापि टीकाकारस्तान् उक्तपञ्चप्रकारमलक्षपणोपायत्वेनापि मनुते। ( ग० का० पृ० २२ )

### १. वासः

वासशब्दोऽस्मिन् दर्शनेऽतीव पारिभाषिकः। अयं गुरुणा सकृदुच्चारितस्य वाक्यस्य सम्पूर्णार्थ-ग्रहणसामर्थ्यम्, गृहीतस्यार्थस्य चिरकालव्यवधानेऽपि स्मरणसामर्थ्यम्, प्रतिपाद्यविषयैकभाग-श्रवणात् सम्पूर्णविषयप्रतिपत्तिसामर्थ्यम्, आचार्यदेशीयैरुक्तानामर्थानां युक्तायुक्तप्रविभागेन यथायथं स्वीकारत्यागसामर्थ्यम्, श्रुतस्यार्थस्य प्रतिपादने तदनुकूलाचरणे च सामर्थ्यम्, मिथ्याज्ञान-निवृत्तिपूर्वकविद्याभिव्यक्तिकरेण पूर्वापरव्याघातपौनरुक्त्यादिदोषरहितप्रवचनेन गुरुसन्तोषणसाम-र्थ्यम्, गुरुपरिचर्यायां गुरुवचनानुपालनेऽतियत्नञ्च अभिधत्ते।

### २. चर्या

"धर्मस्योपायश्चर्या" इति।

जीवन-देवार्चनप्रकारावस्यां संगृहीतौ। इयं पाशुपतसूत्रे प्रथमाध्यायद्वितीयसूत्रादारभ्य द्वितीयाध्यायाष्टमसूत्रपर्यन्तं व्याख्याता, यद्यपि मध्ये विषयान्तरप्रवेशोऽपि विद्यत एव। इदमिह सम्यगवधेयम्। चर्याशब्दो गणकारिकाटीकायामतीव विस्तृतार्थे प्रयुक्तः। भस्मस्नानादारभ्य समाधि-पर्यन्तः सर्वोऽपि कायिकमानसिकाध्यात्मिकक्रियाकलापश्चर्यायामन्तर्भावितः।

चर्याया दान-याग-तापरूपाणि त्रीण्यङ्गानि। (क) दशभिर्नमस्कारैः परमेश्वरायात्म-समर्पणं दानम्, (ख) यथाशासनं भस्मस्नानादिक्रियाणां करणं यागः। (ग) विध्यनुष्ठानपरस्य अप्रतीकारपुरःसरमाध्यात्मिकाधिभौतिकाधिदैविकत्रिविधदुःखसहिष्णुत्वं तापः। इमान्यपुनरावृत्ति-फलकत्वादतिदानातियागातितापशब्दैरुच्यन्ते पुनरावृत्तिफलकदर्शनान्तराभ्युपगतदानादिभ्यो विशेषयितुम्। त्र्यङ्गापि चर्या द्विविधा—वृत्तम्, द्वाराणि चेति। (अ) दैनन्दिनचर्यारूपं वृत्तं पञ्चप्रकारकम्—[1]भस्मस्नानम्, [2]भस्मशयनम्, [3]मन्दिरेऽभिनयद्वारा शिवतादात्म्यापत्तिरूप उपहारः, [4]चित्तैकाग्र्यरूपो जपः, [5]देवस्थानस्थितमूर्तिप्रदक्षिणा इति पञ्चभेदभिन्नत्वात्। (आ) द्वाराणि तु क्राथन-स्पन्दन-मण्टन-शृङ्गारण-अपितत्करण-अपितद्भाषणरूपाण्यनेकविधानि।

३. जपध्यानम्

चर्याया जपध्यानाभ्यामतीव घनिष्ठः सम्बन्धः, चर्यायाः शारीरिकक्रियात्वाद् जपध्यान-योश्च मानसिकक्रियारूपत्वात्। मन्त्रावर्तनं जपः। स द्विविधः—(अ) प्रत्याहारफलः, (आ) समाधिफलश्च। प्रत्याहारोऽपि द्विविधः—(क) अपरः, (ख) परश्च। तत्रेच्छयाऽन्तः-करणस्य बाह्यविषयेभ्यः प्रत्याहरणपूर्वकं ध्येये क्षणं निश्चलीकारोऽपरः प्रत्याहारः। यदा तु बाह्य-विषयेभ्यो मनः प्रत्याहृत्य ध्येयेऽवस्थापयितुं सततोद्युक्तस्य साधकस्य सप्रत्याहारजपवशान्निर्मलं चेतः प्रयत्ननिरपेक्षमेव ब्रह्मण्यलातचक्रवदवतिष्ठते तदा परः प्रत्याहारः। अयमनेकजन्मोपार्जितं कर्म क्षणे-नैव दहति। ध्येयतत्त्वे च चित्तं स्तम्भनिक्षिप्तायःकीलकवन्निश्चलीकरोति। (ग० का० टी० पृ० २०)

रुद्रतत्त्वे सदृशचिन्ताप्रवाहो ध्यानम्। तद् द्विविधम्—(क) जपपूर्वकम्, (ख) धारणापूर्वकञ्च। जपपूर्वकं ध्यानं परप्रत्याहारकारणम्, "परः प्रत्याहारो जपपूर्वक एवायमित्युक्तः" इति वचनात्। सप्रत्याहारजपस्वरूपञ्च निर्दिष्टमेव किञ्चिद् अपरप्रत्याहारवर्णनावसर इति न पुनरुच्यते। जपपूर्वकं ध्यानं सविषयं भवति, अतो धारणापूर्वकादस्य भेदः। संहारावस्थायां मूर्च्छावस्थायां वाऽपतितस्य प्रमातुश्चित्तस्य निरालम्बना विषयसंसर्गशून्याऽवस्था धारणेत्युच्यते, "निरालम्बनं चितममूढस्य धारणम्" इति वचनात्। धारणायां स विषयो यस्मिश्चित्तं संयोज्यते विषयतया बाह्यतया च न भाति, अपि तु चित्तैक्येन तद्वृत्तिरूपत्वेन।

पूर्वं जपः प्रत्याहारफलसमाधिफलरूपाभ्यां द्विविधः कथितः। प्रत्याहारफलश्च व्याख्यातः। समाधिफलश्चान्तिमस्थितिरूपः।

**४. सदारुद्रस्मृतिः**

अविच्छेदेन रुद्रस्मरणं देवनित्यत्वाऽपराभिधं सदा रुद्रे चेतःसमाधानस्य मुख्योपायभूतम्। इदं चेतो विषयान्तरगमनाद्रुणद्धि।

**५. प्रसादः**

प्रसादः पत्युः साधकाय सर्वज्ञत्वसर्वकर्तृत्वादीन् स्वगुणान् दातुमिच्छा। अयं पशुत्वान्मोक्षस्य सिद्धिप्राप्तेश्च मुख्य उपायः।

**पञ्च देशाः**

यत्र मुमुक्षुणा क्रमभाविनीषु भिन्नासु पञ्चसु स्थितिषु क्रमशो वस्तव्यं ते देशा अपि पञ्च—१. शिवमन्दिरम्, २. शिवभक्ताकीर्णं स्थानम्, ३. गुहा, ४. श्मशानम्, ५. रुद्रश्च।

**पञ्चावस्थाः**

यासु पूर्वोक्तदेशेषु मुमुक्षुणा क्रमेण भाव्यं ता अवस्था अपि पञ्च—

१. व्यक्ता—अस्यां मुमुक्षुणा भस्मनिर्माल्यादिपाशुपतचिह्नधारिणा भवितव्यम्, येन पाशुपतोऽयमिति लोका जानीयुः।

२. अव्यक्ता—अस्यां बाह्यपाशुपतलिङ्गानि परित्याज्यानि।

३. जयः—साऽवस्था यस्यां मुमुक्षुरिन्द्रियजयार्थं सततमुद्युज्यते।

४. छेदः—पूर्णा संसारविरक्तताऽवस्था। इयं दानशब्देनाप्युच्यते, यतोऽस्यां मुमुक्षुणा सर्वस्वं त्यज्यते।

५. निष्ठा—सर्वस्य साधकव्यापारस्यात्यन्तोपरमः।

एवमन्येऽपि पञ्चका लाभ-विशुद्धि-दीक्षाकारि-बलाख्या गणकारिकादौ वर्णितास्तत्रैवालोकनीयाः।

## ३. योगः—तृतीयं मुख्यं तत्त्वम्

लाकुलीशदर्शने योगशब्दः पातञ्जलदर्शन इव न चित्तवृत्तिनिरोधार्थ एव प्रयुज्यते, अपि तु प्राधान्येन आत्मेश्वरसंयोगार्थे;

"आत्मेश्वरसंयोगो योगः" ( पा० सू० टी० २४ ),

"चित्तद्वारेणेश्वरसम्बन्धः पुरुषस्य योगः" ( ग० का० टी० १४ )

इति वचनप्रामाण्यात् । तृतीयमुख्यतत्त्वार्थे प्रयुज्यमानस्य योगशब्दस्यायमेवार्थः । एवञ्च पातञ्जलदर्शने योग उपायमात्रम्, इह तु योग उपेयः । परन्तु स्मरणीयमिदं यदयं शब्दः क्वचनोपायार्थेऽपि प्रयुज्यतेऽस्मिन् दर्शनेऽपि ।

आत्मेश्वरसंयोगरूपो योगः परिच्छिन्नप्रमातृक्रियामात्रेण न जायते, यथा श्येनस्य स्थाणुना । अयं तु उभयकर्मजः, यथा युद्धप्रवृत्तयोर्मेषयोः । अतो योग ईश्वरानुग्रहं विना न शक्यते लब्धुमिति लाकुलीशसिद्धान्तः ।

जीवात्मा विभुः, एवञ्च सर्वदैवास्येश्वरसंयोगः स्वतः सिद्धः; तथाप्यनादिपशुत्वमलजनिताज्ञानक्रियाशक्त्योः परिच्छेदादस्य वियोग ईश्वरात् । अतो योगो मलध्वंसमपेक्षते । स च पाशुपतशास्त्रोक्तविध्यनुष्ठानजन्यः । स च विधिः पाशुपतसूत्रे सविस्तरं वर्णितः प्रथमसूत्रकृतप्रतिज्ञानुसारम्—

"अथातः पशुपतेः पाशुपतं योगविधिं व्याख्यास्यामः" इति ।

## द्विविधो योगः

क्रियालक्षणः क्रियोपरमलक्षणश्चेति द्विविधो योगः । प्रथमो योगः शारीरिकक्रियाप्रधानया मानसक्रियया प्राप्योऽत एव क्रियालक्षण इत्युच्यते । लकुलीशपाशुपतदर्शनम् आङ्गिक-वाचिक-आहार्य-सात्त्विकरूपांश्चतुरोऽभिनयान् नृत्यं गीतञ्च शिवसायुज्योपायत्वेन स्वीकरोति, एवञ्च नाटकीयकार्यस्य आरम्भ-यत्न-प्राप्त्याशा नियताप्ति-फलागमरूपपञ्चावस्थावद्योगस्यापि पञ्चावस्था मनुते ।

प्रारम्भिकी प्रथमावस्था शिवे आत्मभावप्रवृत्तिरूपा ( पा० सू० टी० ४१ ) । सा च प्रथमाध्यायद्वितीयसूत्रादारभ्यैकोनविंशतिसूत्रपर्यन्तं व्याख्यातस्य विधेरनुष्ठानाल्लभ्यते । इदं सर्वं चर्याविवेचनावसरे पूर्वमेवोक्तमिति पिष्टपेषणमनावश्यकम् ।

यदा प्रथमावस्थानुष्ठितविधिप्रभावात् कामक्रोधलोभमोहमदमात्सर्येर्ष्यारूपकालुष्यविमुक्ते साधके तत्त्वज्ञानमुदेति, तदा स्वीयकालुष्यविमुक्तत्वं परीक्ष्य "अनेन विधिना रुद्रसमीपं गत्वा" ( पा० सू० १०६ ) इति सूत्रोक्तामवस्थां प्राप्तुं दरिद्रपुरुषस्नातमलदिग्धाङ्गो रूढनखश्मश्रुरोमधारी सर्वसंस्कारवर्जितो व्युच्छिन्नवर्णाश्रमचिह्नो नगरं प्रविश्य यत्र लौकिकानां समूहस्तत्र हस्त्य-

श्वरथपदातीनां स्थानं वर्जयित्वा तस्मिन् स्थाने उपविश्य, यस्मिञ्जनदृष्टिनिपातो भवेत्, सौषुप्ताभिनयरूपं क्राथनम्, वायुसंसृष्टत्वाभिनयनरूपं स्पन्दनम्, उपहतपादेन्द्रियत्वाभिनयरूपं मण्टनम्, रूपयौवनसंपन्नां स्त्रियं वीक्ष्य कामित्वाभिनयरूपं शृङ्गारणम्, शुच्यशुच्योः कार्याकार्ययोश्च विभागानभिज्ञत्वाभिनयनरूपमपितत्करणम्, पुनरुक्तव्याहतादिभाषणेन असभ्यत्वाद्यभिनयनरूपमपितद्भाषणं तथा कुर्याद्येनायं परिभवं गच्छेत्। अयं विधिर्न केवलं सत्यपि परिभवे मनःकालुष्याभावपरीक्षणार्थम्, अपि तु परिभवितॄणामिष्टापूर्तजन्यं सकलमपि सुकृतफलमादातुम्। एतत् समर्थयितुं लकुलीशः पाशुपतसूत्रे परम्परागतां गाथां समुल्लिखति स्म यदिन्द्रोऽसुराणां पुण्यफलमादातुं स्वदुष्कृतफलञ्च तेभ्यो दातुं क्राथनस्पन्दनादिरूपं पूर्वोक्तं पाशुपतमाचरत्। यथाह—

इन्द्रो वा अग्रे असुरेषु पाशुपतमचरत्।

स तेषामिष्टापूर्तमादत्त।

मायया सुकृतया समविन्दत्। ( पा० सू० १०१-१०३ ) इति।

एवं शास्त्रोक्तपञ्चपदार्थस्वरूपवेत्ता लाभमलोपायाभिज्ञः साधकः क्राथनाद्यभिनयेनात्मानं परिभवपात्रीकृत्य परिभावकानां पुण्यमादाय कृत्स्नतपा भवति, आत्मसाक्षात्कारं विन्दते च। यथाह—

"परिभूयमानो हि विद्वान् कृत्स्नतपा भवति" ( पा० सू० ८८ )।

अस्यां द्वितीयावस्थायां साधकेन "वामदेवाय नमः" इति मन्त्रो जपनीयः। अस्यामवस्थायां साधकः पत्या सह समीपाभिधं योगं प्राप्नोति। केषाञ्चन दार्शनिकानां सामीप्यमोक्षाभ्युपगम एतन्मूलक एव भाति।

"अनेन विधिना रुद्रसमीपं गत्वा" ( पा० सू० १०६ )।

एवं पूर्वोक्तशारीरिकक्रियासहकृतमानसक्रियाप्राप्यः प्रथमो योगः क्रियालक्षण इति परिभाष्यते।

**क्रियोपरमलक्षणो योगः**

क्रियोपरमलक्षणो द्वितीयो योगो नापेक्षते कामपि शारीरिकीं क्रियाम्। अयं केवलमनोनियोगसाध्यः। अन्यास्तिस्रोऽवस्था एतदन्तर्गताः स्वीक्रियन्ते।

तृतीयावस्था सांसारिक-सर्वपदार्थविरक्तस्य साधकस्य गुहां गत्वा "अघोरेभ्यः" इति मन्त्रोक्तशिवरूपध्यानादारभते। लाकुलीशदर्शने जपध्यानयोरतीव घनिष्ठः सम्बन्धः। अत एव

गणकारिकायां पञ्चसु पाशापरपर्यायमलक्षपणोपायेषु जपध्याने समस्य जप-ध्यान-रूप एक एवोपायो निर्दिष्टः ।

"तृतीयचतुर्थकस्य मन्त्रस्यावर्तनं जपः" (ग० का० टी० १९)

"रुद्रे सदृशचिन्ताप्रवाहो ध्यानम्" (ग० का० टी० २०)

इति चोक्तम् । अस्यामवस्थायां ध्यानदौर्बल्याद् ध्येयं गतमपि साधकचेतस्ततः प्रत्यावर्तते, परन्तु विषयान्तरमगत्वा ध्येयमेव प्रत्यागच्छति । अतो विषयान्तरसम्पर्करहित-ध्येयमात्रविषयक-गमनप्रत्यागमनकारिसाधकचेतोऽविच्छेदेन ब्रह्मावस्थितं भाति, यथा—अलाते अतित्वरया भ्रामितेऽविच्छिन्नमग्निचक्रं भाति । यथाह—

"ब्रह्मण्येवालातचक्रवदवतिष्ठते" (ग० का० पृ० २०)

इयमिच्छाशक्तिप्रेरितध्यानजन्या ।

चतुर्थ्यवस्था श्मशाने वसतः साधकस्य धारणापूर्वकं 'तत्पुरुष'मन्त्रोपलक्षित-ब्रह्मध्यानाज्जायते । अस्यां ध्यानविषयो ध्यातृबाह्यतया न भाति, अपि तु ध्यात्रैक्येन । यतः संहारावस्थायां मूर्च्छावस्थायां वाऽपतितस्य प्रमातुश्चित्तस्य निरालम्बना विषयसंसर्गशून्या दशा धारणेत्युच्यते । यथाह—

"निरालम्बनं चित्तममूढस्य धारणम्" (ग० का० पृ० २०) इति ।

अयं 'निष्ठायोगः' 'देवनित्यता' इति च परिभाष्यते (पा० सू० ११६-११७) । अस्यामवस्थायां यती पात्रागतं महिषवराहादीनां मांसमपि भुङ्क्ते, "मांसमदुष्यम्" (पा० सू० पृ० ११९) इति वचनात् । पञ्चम्यन्त्या चावस्था "ईशानः सर्वविद्यानाम्" इति मन्त्रोपलक्षिते ब्रह्मणि समाधिना जन्यते । अयं योगः सायुज्याभिधः,

"लभते रुद्रसायुज्यम्" (पा० सू० १३९)

इति वचनात् । सायुज्ययोगे सर्वज्ञत्वादिपतिशक्तयः पशुं संक्रामन्ति । एवञ्च पशुः सदा नित्यं सततमव्युच्छिन्नं शिवो भवति,

"सदाशिवः" (पा० सू० १४६)

इति वचनात् । इयमवस्था शरीरत्यागानन्तरं जायते ।

परन्तु योगशब्दः सायुज्यप्राप्त्युपायार्थेऽपि प्रयुज्यत इति प्रागुक्तम् । अत उपायापर-पर्यायो योगो यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपाष्टाङ्गः । यमाश्च पञ्चार्थ-

भाष्ये ( पृ० १६-३४ ), तथा तदनुसारं विशुद्धमुनिकृतयमप्रकरणे दशसंख्याकाः प्रोक्ताः। तदुक्तम्—

अहिंसा ब्रह्मचर्यं च सत्यासंव्यवहारकौ।
अस्तेयं गुरुशुश्रूषा शौचमाहारलाघवम्॥
अक्रोधोऽप्रमाद उक्ताः पाल्यन्त इति शम्भुना।
दशैवादेहपतनात् पञ्चार्थे योगिनां यमाः॥ इति।

( य० प्र० का० ३-४ )

नियमादयश्च चर्याव्याख्यानावसरेंऽशेन व्याख्याताः। विधिव्याख्याने च नातिदूरेऽवशिष्टांशा व्याख्यास्यन्त इति।

## ४. विधिः

विधिश्चतुर्थो मुख्यः पदार्थः। स च धर्मार्थः साधकव्यापारः। विधिर्द्विविधः—प्रधानभूतो गुणभूतश्च। अव्यवधानेन धर्महेतुर्यो विधिः स प्रधानभूतश्चर्येत्युच्यते।

स च मलक्षपणोपायप्रदर्शनावसरे पूर्वं व्याख्यात इति नेह प्रतन्यते। चर्यानुग्राहको विधिर्गुणभूतो भस्मस्नाननिर्माल्यधारणादिः। आयतनवासित्वं तथा कलुषक्षपणार्थमनुष्ठितम् उपस्पर्शन-प्राणायाम-जपरूपं त्रिकं चर्यानुग्राहकत्वाद् गुणभूतविध्यन्तर्गतमेव। दशाऽहिंसादयो यमा यदा चर्यानुग्राहकास्तदा विध्यन्तर्भूताः, यदा तु योगक्रियानुग्राहकास्तदा योगान्तर्भूताः ( पा० सू० ८-४१, ग० का० टी० १२-४ )।

आगमाऽविरोधिन्योऽन्नार्जनोपायरूपा भैक्ष-उत्सृष्ट-यथालब्धसंज्ञकास्तिस्रो वृत्तयोऽप्यत्रैवान्तर्भवन्ति। तत्र प्रथमावस्थस्य भैक्षमेव वृत्तिः। देवाद्युद्देशेन परित्यक्तं कारुण्यकौतूहलाभ्यां केनाप्यदुष्टजातिनाऽशुचित्वादिदोपरहितं दत्तं वान्नपानाद्युत्सृष्टमित्युच्यते। द्वितीयावस्थस्य तदेव वृत्तिः। तृतीयावस्थस्यापि भैक्षमेव वृत्तिः। परमेतावानत्र विशेषः। तृतीयावस्थः परमयोगित्वाद् भैक्षं भुञ्जन् प्रायश्चित्तनिवेदनपञ्चब्रह्मजपानुस्नानादिकं न करोति। चतुर्थावस्थस्य यथालब्धं वृत्तिः। पञ्चमावस्थस्य शरीराभावाद् वृत्त्यनुपपत्तिः। इमास्तिस्रो वृत्तयः।

## ५. दुःखान्तः

सर्वेषामाधिदैविकाधिभौतिकाध्यात्मिकानां दुःखानामात्यन्तिकः प्रध्वंसः पञ्चमोऽन्तिमः पदार्थः।

नायं ज्ञानवैराग्यलभ्यः, अपि त्वीश्वरानुग्रहेणैव । स च द्विविधः—अनात्मकः सात्मकश्च । अनात्मकः केवलं दुःखान्तस्वरूपः । अयमेव न्यायवैशेषिकाभ्युपगतो मोक्षः, "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति सूत्रनिर्दिष्टान्मोक्षान्निरात्मकस्वरूपदुःखान्तस्यांशेनापि भेदाभावात् ।

सात्मको दुःखान्तो न केवलमाधिभौतिकादिदुःखानामात्यन्तिको विनाशः, अपि तु सर्वज्ञत्व-सर्वकर्तृत्वप्राप्तिरपि । सर्वज्ञत्वसर्वकर्तृत्वे सिद्धं पशोर्विशेषयतः । ते च सायुज्यरूपयोगे संजाते शिवात् पशुं संक्रामतः ।

## सिद्धः

सिद्धः सर्वज्ञः सर्वकर्ता च । ज्ञातृत्वशक्तिः परमार्थत एकाऽपि विभिन्नविषयसम्बन्धाद् भिन्नैर्दूरदर्शनादिनामभिरुच्यते । कर्तृत्वशक्तिश्च सर्जने मनोजवित्वरूपा । अस्य सर्जनविचारोदय-सर्जनक्रिययोर्मध्ये न भवति किमप्यन्तरालं प्रजापतेरिव । प्रजापतिना हि सर्जनविचारोद्गमानन्तरं तपस्तप्तव्यं भवति सर्जनक्रियाप्रारम्भात् प्राक् । सिद्धः स्वतन्त्रयेच्छयैव सर्वं सृजतीति कामरूपी । सर्वेषां सृष्टानां संहरणे शक्तो न तु विश्वामित्रवदशक्त इति विकरणः ।

लाकुलीशदर्शने न केवलं बन्धमोक्ष एव मोक्षः, अपि तु पतिसायुज्यमपि । सायुज्यस्यास्मिन् दर्शनेऽतीव महत्त्वम् , यत इदं सांख्य-योग-बौद्ध-वेदान्तादिदर्शनाभ्युपगतमोक्षस्वरूपेभ्यो लाकुलीशं मोक्षस्वरूपं विभेदयति । प्राप्तसायुज्य आत्मा युक्त इत्युच्यते । पतिवद्विभुरप्यात्मा मनसा सह स्वतादात्म्यीकरणात् परिच्छिन्नो भवति, विषयं प्रति धावति, तं चावाप्य तत्र वृक्षे शकुनिवदवतिष्ठते । अततीत्यात्मा, आपूर्य कार्यकरणं विषयांश्चेतयतीत्यात्मा । यथोक्तम् —

यदाप्नोति यदादत्ते यच्चात्ति विषयान् पुमान् ।
यच्चास्य सततं भावस्तस्मादात्मेति संज्ञितः ॥ इति ।

( पा० सू० टी० पृ० १११ )

एवंविधः परिच्छिन्न आत्मा संसारीत्युच्यते । परन्तु विषयविमुखः, व्यपगतपरिच्छेदः, निर्गतदोषः, विषयवासनारहितः, असङ्गः, इच्छाद्वेषनिवृत्तः, अप्रवृत्तिमान्

"शङ्खदुन्दुभिनिर्घोषैर्विविधैर्गीतवादितैः"

ईश्वरयोगादच्याव्य आत्मा शरीरेन्द्रियसम्बन्धेऽपि युक्त इत्युच्यते ।

## लकुलीशपाशुपतभेदाभेदवादस्यापरभेदाभेदवादेभ्यो वैलक्षण्यम्

भेदाभेदवादो न केवलं शैवागमपरम्परायामपि तु वैदिकपरम्परायामप्युपलभ्यते। वैदिक-भेदाभेदवादिनोः 'आश्मरथ्य'-'औडुलोमि'-मतयोर्बादरायणेन स्वीयब्रह्मसूत्रे कृत एवोपन्यासः। इमौ भेदाभेदवादौ ब्रह्मसूत्रटीकाकारोल्लेखैरेव ज्ञायेते। अतस्तयोर्विस्तृतं विवरणमशक्यम्। एतावन्मात्रं तु स्पष्टं यदुभावपि जीवस्य ब्रह्मणः पृथक्सत्तामेकस्यामवस्थायामपरस्याञ्च तयोरैक्यं स्वीकृतवन्तौ। आश्मरथ्यमते कारणरूपेण तयोरैक्यं कार्यरूपेण च भेदः। यथोक्तं शाङ्करभाष्ये—"आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम्, तथापि "प्रतिज्ञासिद्धेः" इति सापेक्षत्वाभिधानात् कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते" (ब्र० सू० शा० भा० पृ० ३३३)।

यथा चोक्तं वाचस्पतिमिश्रेण "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः" इति सूत्रटीकायाम्—"यथा हि वह्नेर्विकारा व्युच्चरन्तो विस्फुलिङ्गा न वह्नेरत्यन्तं भिद्यन्ते, तद्रूपनिरूपणात्; नापि ततोऽत्यन्तमभिन्नाः, वह्नेरिव परस्परव्यावृत्त्यभावप्रसङ्गात्; तथा जीवात्मानोऽपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्तं भिद्यन्ते, चिद्रूपत्वाभावप्रसङ्गात्; नापि ततोऽत्यन्तमभिन्नाः, वह्नेरिव परस्पर-व्यावृत्त्यभावप्रसङ्गात्; सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्च। तस्मात् कथञ्चिद् भेदो जीवात्मनामभेदश्च" इति।

सुदर्शनसूरिकृतश्रीभाष्यटीका-श्रुतप्रकाशिकावचनाच्चेदं प्रतीयते यदाश्मरथ्यस्य भेदाभेद-वादो रामानुजगुरुणा यादवप्रकाशेन स्वीकृतः पोषितश्च।

औडुलोमिस्तु संसारदशायामनेके जीवाः एकात्मकाद् ब्रह्मणो नितान्तं भिन्नाः, परं मुक्तिदशायां जीवब्रह्मणोरभेद इति प्रतिपादितवान्। यथोक्तं शाङ्करभाष्ये—"औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते" (ब्र० सू० शां० भा० पृ० ३३३)। एवमौडुलोमि-र्नदीनां समुद्रादिव, संसारदशायां जीवानां ब्रह्मणः पृथक् सत्तां स्वीकृत्य भेदम्, तथा समुद्रपति-तानां तासां समुद्रैक्यमिव मुक्तौ जीवब्रह्मैक्यमभ्युपगत्य भेदाभेदमतं समर्थितवान्।

काशकृत्स्नो भेदाभेदवाद्यभेदवादी वाऽऽसीदित्यत्र मतभेदः। शङ्कराचार्यानुसारं सोऽभेदवादी। परन्तु निम्बार्कशिष्यः श्रीनिवासाचार्यः स्वीयवेदान्तकौस्तुभे "अवस्थितेरिति काशकृत्स्नः" इति सूत्रव्याख्यायां काशकृत्स्नमपि भेदाभेदवादिनं मनुते। यथाह—

"तदेवं मुनित्रयमतद्वारा प्रसङ्गाद् भेदाभेदप्रकारो भगवता दर्शितः" इति।

शङ्कराचार्यात् पूर्वभाविना भर्तृप्रपञ्चेनापि भेदाभेदवादः कार्यकारणरूपावस्थाभेदमाश्रित्य समुद्रतरङ्गन्यायेन समर्थितः। इदञ्च बृहदारण्यकोपनिषट्टीकायां शङ्करकृताद् भर्तृप्रपञ्चमतखण्डनादवगम्यते।

भर्तृप्रपञ्चमते कार्यकारणरूपतया भेदाभेदरूपं ब्रह्म। कारणब्रह्म कार्यब्रह्मणो भिन्नं समुद्रादिव वीचयः, (यद्यपि परस्य पूर्वभावापत्तौ तयोरैक्यम्)। समुद्रस्य हि समुद्ररूपतयैकता, परं तरङ्गबुद्बुदादिरूपतयाऽनेकता नानात्वं वा। एवं ब्रह्मपरिणामवादी भर्तृप्रपञ्चो जीवजगतोः सत्ता न काल्पनिकी, अपि तु वास्तविकी, तथा जीवब्रह्मणोरंशांशिभाव इति मन्यमानो भेदाभेदवादमवलम्बते।

शङ्कराचार्यात् परभाविना (९०० ईशवीये) भास्करेणापि स्वीयायां भास्करभाष्यनाम्न्यां ब्रह्मसूत्रटीकायां भेदाभेदवाद एवाश्रितः। अयमपि कार्यकारणरूपावस्थाभेदमवलम्ब्य ब्रह्मणो भेदाभेदरूपत्वं समर्थयति, समुद्रतरङ्गन्यायेन सुवर्णकुण्डलादिन्यायेन च। यथाह—

कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥ इति।

ब्रह्मणः सर्वज्ञत्वं सर्वशक्तिमत्त्वं च साधारणतया स्वीकुर्वन्नपि चेतनाचेतनतया द्विधा विभक्तस्य जगतः कारणरूपस्य तस्य भोग्यभोक्तृरूपं शक्तिद्वयं प्रतिपादयति। ब्रह्म सगुणं सत्यं ज्ञानमनन्तञ्च स्वभावतः परिणमते, सूर्यो रश्मीनिव प्रसारयति, विक्षिपति, स्वशक्तीः।

"ब्रह्म स्वत एव परिणमते तत्स्वाभाव्यात्" (भा० भा० पृ० २४),
"अप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः परिणामः" (भा० भा० पृ० ९९)

इति हि तत्सिद्धान्तः। एवञ्च भोगशक्तिराकाशाद्यचेतनरूपतया परिणमते, भोक्तृशक्तिश्च चेतनजीवरूपेण। जीवो ह्यग्नेर्विस्फुलिङ्गवद् ब्रह्मणोंऽशभूतो भिन्नोऽभिन्नश्च। भेद उपाधिजन्यः, अभेदस्तु स्वाभाविकः। उपाधिषु निवृत्तेषु भेदो व्यपगच्छति, परमात्माऽभेदरूपो मोक्षश्च भवति।

रामानुजगुरुर्यादवोऽपि ब्रह्मसूत्रटीकायां भगवद्गीताटीकायाञ्च भेदाभेदमेव साधितवान्। रामानुजेन वेदार्थसंग्रहे, वेदान्तदेशिकेन परमतभङ्गे, व्यासतीर्थेन च तात्पर्यचन्द्रिकायां समुल्लिखित-

मेतन्मतम्। अयं निर्गुणब्रह्मवादं मायावादं च निरस्य सगुणब्रह्मवादं भेदाभेदवादञ्च द्रढयति। यादवप्रकाशो भास्कराचार्यवद् ब्रह्मपरिणामवादं प्रतिपादयति। स मनुते यद् ब्रह्म चिदचिदीश्वररूपेण परिणमते। ईश्वरश्चेच्चिदन्तर्गतः स्वीक्रियेत तर्हि चिदचितौ उभे अप्येकस्यावस्थाभेदमात्रे, न स्वरूपेण स्वतन्त्रद्रव्यस्वरूपे। अयं भेदाभेदवादी। एतन्नये भेदाभेदावुभावपि सत्यावेककालविनौ च। ब्रह्म परिवर्तमानमपि न जहाति स्वस्वरूपभूतं शुद्धत्वं रश्मीन् विक्षिपन्निव सूर्यः। नास्ति विरोध एकस्यैव वस्तुनः समकालिकभेदाभेदाभ्युपगमे। सर्वमपि वस्तु एकानेकरूपं भेदाभेदरूपं वा, कारणांशे जात्यंशे चाभिन्नत्वात्; कार्यांशे व्यक्त्यंशे च भिन्नत्वात् (सर्वार्थसिद्धिः ३,२७)।

## जीवन्ति भेदाभेदमतानि

यद्यप्युपरिलिखितानि सर्वाण्यपि भेदाभेदमतानि लुप्तप्रायाण्युल्लेखमात्रोपलभ्यानि च, तथाप्यद्यापि केषुचन शैववैष्णवदर्शनेषु जीवति भेदाभेदवादः।

## १. भेदाभेदवादिवीरशैवमतम्

ईशवीयद्वादशशतकसमुद्भूतं वीरशैवमतं "द्वैताद्वैतम्, सेश्वराद्वैतम्, शिवाद्वैतम्, सर्वश्रुतिसामरस्यमतम्" इत्यादिभिर्भिन्नैर्नामभिः सुप्रसिद्धम्। इमानि नामानि मुख्यं दार्शनिकसिद्धान्तं भिन्नदृष्टिकोणेभ्योऽवलोकयद्भिर्दत्तानि। इदं द्वैताद्वैतमित्युच्यते। यतोऽस्मिन् सिद्धान्ते भक्तिर्मुख्यो मुक्त्युपायः, सा च भक्तभज्यमानयोर्द्वैतमपेक्षते। परन्तु मुक्तौ जीवो ब्रह्म सञ्जायते, भ्रमरकीटन्यायेन। अतो जीवेश्वरयोरनादिभेदस्वीकारेऽपि मुक्तौ तदैक्यस्वीकाराद् बद्धावस्थायां भेदो मुक्तावस्थायामभेद इत्यवस्थाभेदेन भेदाभेदयोरुभयोरप्यभ्युपगमाद् द्वैताद्वैतमिदं मतम्। अस्यास्मिन्नंश औडुलोमिप्रतिपादितद्वैताद्वैतसिद्धान्तेनैक्यं सुस्पष्टम्।

## २. निम्बार्कमते भेदाभेदवादः

भेदाभेदवाद ईशवीयैकादशशतकभवेन निम्बार्केण प्रचालिते कृष्णोपासकसम्प्रदायेऽपि सजीवः, सादरमनुस्रियते चाद्यापि।

निम्बार्को रामानुजीयं चिदचिदीश्वररूपं पदार्थत्रयं स्वीकरोति। चिद्रूपो जीवो ज्ञानस्वरूपः, ज्ञानमयः, प्रज्ञानघनः, स्वयंज्योतिः। ज्ञानमयोऽपि ज्ञानाश्रयो ज्ञाता, यथा प्रकाशस्वरूपोऽपि सूर्यः प्रकाशाश्रयः। जीवस्य स्वरूपभूतगुणभूतज्ञाने ज्ञानरूपेण परस्पराभिन्नेऽपि धर्मधर्मिभावेन परस्परतो भिन्ने। भोगस्य मोक्षस्य च प्राप्तौ जीव ईश्वरपरतन्त्रो न तु स्वतन्त्रः। एवञ्च ज्ञानमयत्वेन जीवस्येश्वराभेदेऽपि नियम्यतया ईश्वराद् भेद इति निम्बार्को जीवस्वरूपप्रति-

पादने भेदाभेदमवलम्बते। बद्धावस्थायां सर्वव्यापकादप्रच्युतस्वभावात् सर्वज्ञाद्-ब्रह्मणोऽणुरल्पज्ञो जीवो भिन्नोऽपि वृक्षात् पत्रमिव दीपात् प्रभेव प्राणादिन्द्रियशक्तिरिव न पृथक्स्थितिरित्यभिन्नः। एवं मोक्षेऽपि भगवत्प्रसादान्मायाकृतधर्मभूतज्ञानसङ्कोचापगमात् स्वस्वरूपलाभेऽपि व्यक्तित्वानपगमादीश्वराद्भिन्नोऽभिन्नश्च जीव इति भोगमोक्षावुभावपि भेदाभेदवादाश्रितौ।

## ३. चैतन्यमतेऽचिन्त्यभेदाभेदवादः

अपरो भेदाभेदवादो योऽधुनापि जागर्ति, स चैतन्यस्थापितोऽचिन्त्यभेदाभेदवाद इति प्रसिद्धः। चैतन्यदेव ईशवीयपञ्चादशशतके समभूत्। एतन्नये विज्ञानानन्दविग्रहो भगवान् सत्यकामत्व-सत्यसंकल्पत्व-सर्वज्ञत्वाद्यनन्तापरिमितगुणवान्। गुणगुणिनोर्न वास्तवो भेदोऽत एव सत्यकामत्वादिगुणा न भगवतो भिन्नाः। विग्रहोऽपि भगवतोऽभिन्नो नित्योऽप्राकृतश्च। एवञ्च विग्रहो गुणाश्च भगवदभिन्नाः। अयं भगवानेव ब्रह्मेत्युच्यते। रामानुजमत इवास्मिन् मते ब्रह्मणि स्वगतभेदो नाभ्युपगम्यते, अपि तु शाङ्करवेदान्त इव स्वगतस्यापि भेदस्याभावः स्थाप्यते, तथाप्यचिन्त्यापरिमेयशक्त्या, या 'विशेष' इति परिभाष्यते, नानात्मकतया भासमानोऽप्येकात्मक एवावतिष्ठते।

अचिन्त्याकारानन्तशक्तिमतोऽपि भगवतस्तिस्रः शक्तयो मुख्याः। स्वरूपशक्तिर्याऽन्तरङ्गेत्यप्युच्यते, तटस्था या जीवशक्त्यपरपर्याया, मायाशक्तिश्च। तटस्था शक्तिः परिच्छिन्नस्वभावाणुत्वविशिष्टजीवाविर्भावकारणम्। मायाशक्तिश्च प्राकृतजगतः। स्वरूपशक्त्या भगवान् जगतो निमित्तकारणम्। मायाजीवशक्तिभ्यां चोपादानकारणम्। अतो भगवानभिन्ननिमित्तोपादानकारणम्। केषुचित्स्थलेषु भगवतो मुख्या एकैव शक्तिः स्वीक्रियते, सा च स्वरूपशक्तिरित्यभिधीयते। सा च भगवता विभिन्नरूपत्रयेणोपयुज्यमाना चिच्छक्तिर्जीवशक्तिर्मायाशक्तिरिति नामत्रयेणोच्यते।

सत्यसङ्कल्पस्य भगवतो बहिरङ्गमायाजीवशक्तिविलासस्वरूपत्वाज्जगत् सत्यम्। प्रलयेऽपि जगत् सूक्ष्मरूपेण भगवत्यवतिष्ठते। अचिन्त्यशक्त्या जगन्नैकान्ततो भगवतोऽभिन्नं नापि भिन्नं प्रतीयते। अतश्चैतन्यमतमचिन्त्यभेदाभेदवादः।

## लकुलीशापरभाविनां भेदाभेदवादानामुपरि लाकुलीशभेदाभेदप्रभावः

यद्यप्याश्मरथ्य औडुलोमिस्वीकृतयोर्भेदाभेदवादयोरुल्लेखो बादरायणीयब्रह्मसूत्रे समुपलभ्यते, तथाप्येकः कारणरूपेणाभेदं कार्यरूपेण भेदमपरश्च मुक्तावस्थायामभेदं संसारावस्थायां च

भेदं स्वीकृत्य भेदाभेदमतं प्रतिपादितवानित्येतावन्मात्रमेव तद्विषये ज्ञायते। एते मते बादरायणात् पूर्वभावित्वादतीव प्राचीने। परन्तु तयोः स्पष्टं विस्तृतं रूपं नोपलभ्यते। अतो नेदं शक्यते वक्तुं यत्कियांस्तयोः प्रभावो भर्तृप्रपञ्चादिप्रतिपादितभेदाभेदवादेष्वापतितः।

ईशवीयद्वितीयशतकभाविनो लकुलीशस्य भेदाभेदवादः सविस्तरमुपलभ्यते। ततश्चेदं स्पष्टीभवति यत्तदपरभाविनो भेदाभेदवादा विशिष्टाद्वैतवादाश्च तत्प्रभाविताः। एतच्च पूर्वोपपादितानां लकुलीशपाशुपतसिद्धान्तांशानां स्मारणेन विशदीक्रियते।

(क) लकुलीशपाशुपतदर्शनं सत्कार्यवादमवलम्बते। एतन्नये कार्यं विद्या-कला पशुरूपं नित्यम्।

(ख) सर्जनक्रियायामीश्वरः स्वतन्त्रः स्वबाह्यपरमाणुकर्मादिनिरपेक्षः।

(ग) आत्मानात्मनोः, कार्यकारणयोः, जडचेतनयोर्भेदस्तात्त्विकः।

(घ) पत्युस्तत्त्वतो भिन्नस्यापि कार्यजातस्य विद्याकलारूपस्य न स्वतन्त्रा पत्युर्बहिः सत्ता, नापि तस्य पत्या सह समप्राधान्यम्; अपि तु हार्य-धार्य-कार्यत्वेन पत्यधीनत्वमस्वातन्त्र्यञ्च। अत इदं भेदाभेदवादि, यतः कार्यकारणयोस्तात्त्विकं भेदं स्वीकुर्वदपि कार्यं कारणान्तर्गतमेव व्यक्ताऽव्यक्तावस्थाद्वयेऽपि मनुते।

(ङ) पतिरभिन्ननिमित्तोपादानकारणं जगतः, स हि भवोद्भवः।

(च) परतत्त्वं नैकरूपम्, अपि त्वेकानेकरूपम्। बहुत्वमेकस्मिन् परतत्त्वेऽन्तर्गतं नभसीव ताराः।

(छ) अस्वतन्त्रं सर्वं कार्यम्। न तु यज्जन्यत उत्पाद्यते यस्य चोत्पत्तेः प्रागभावः।

(ज) सृष्टिरपि भवे विद्यमानानां वस्तूनां वृत्तिलाभमात्ररूपा।

(झ) जीवात्मा विभुः। तथाप्यनाद्याणवापरपर्यायपशुत्वमलजनिताज्ञानक्रियाशक्त्योः परिच्छेदात् परिच्छिन्नः, तद्व्यपगमे तु सदाशिवः।

(ञ) परतत्त्वं सगुणम्, पत्युः शक्तिर्गुणो धर्म इति वोच्यते।

(ट) विद्या-कला-पशुसंज्ञकार्यत्रयविषयकोत्पादनतिरोभावनानुग्रहाः पत्युर्देवस्य क्रीडामात्रम्।

इमान् लकुलीशसिद्धान्तांशान् स्मरन्तो वयं यदि भिन्नानां पूर्वप्रतिपादितानां भेदाभेदवादानामुपरि दृष्टिं क्षिपामस्तर्हीदं स्पष्टीभवति यद् ब्रह्मणः सगुणत्वस्वीकारे, ब्रह्मपरिणामवादाभ्युपगमे तस्याभिन्ननिमित्तोपादनत्व-सर्जनस्वतन्त्रत्व-क्रीडाशीलदेवत्वप्रतिपादने, चिदचितोस्तात्त्विकं भेद-

मभ्युपगत्यापि तयोः परमकारणेश्वराऽपृथग्भूतत्वादभेदस्वीकारपुरःसरं भेदाभेदस्थापने, अन्येषु चांशेषु भिन्ना भेदाभेदप्रतिपादका लाकुलीशभेदाभेदप्रभाविताः।

## शैवविशिष्टाद्वैतसाधकस्य श्रीकण्ठस्योपरि लाकुलीशभेदाभेदप्रभावः

श्रीकण्ठो (ईशवीयैकादशशताब्दयां) भेदाभेदवादं सम्यग् जानाति स्मेत्यत्र न विवादावसरः। यतः स स्वकण्ठेन भेदाभेदखण्डनं कृतवान्। यथाह—

"भेदाभेदकल्पनं विशिष्टाद्वैतं साधयामः" इति,

"न च भेदाभेदवादिनः, वस्तुविरोधात्। किन्तु शरीरशरीरिणोरिव गुणगुणिनोरिव च विशिष्टाद्वैतवादिनः" (श्रीकण्ठ० २-२-२१) इति च।

भेदाभेदवादिनये ब्रह्माकारेणाद्वैतं भोक्तृभोग्याकारेण द्वैतमित्याकारभेदेन विरोधाभाव इति प्रागेवावेदितम्। इदमेव मतम् आश्मरथ्येन, भर्तृप्रपञ्चेन, भास्करेण च कारणरूपतयाऽभेदः कार्यरूपतया भेद इति भिन्नशब्दश्रेण्या स्वीकृतम्।

## श्रीकण्ठस्य लकुलीशपाशुपतभेदाभेदसाधारणा अभ्युपगमाः

(क) पत्यपरपर्यायं ब्रह्म सगुणम्। शक्तिस्तस्य गुणो धर्मो वा। यदाह राशीकरः—

"यदेतत्पत्युः पतित्वं शक्तिः सामर्थ्यमैश्वर्यं स्वगुणः सद्भावः सतत्त्वं तत्त्वधर्मः तत् आसनम्......अतोऽव्ययोऽमृतो भगवान् कामतः स्वशक्तिस्थं कार्यं स्वशक्त्याध्यास्ते" (पा० सू० पृ० ५८) इति।

(ख) सत्कार्यवादः। श्रीकण्ठोऽष्टाविंशत्यागमप्रामाण्यं पति-पशु-पाशरूपतत्त्वत्रयञ्च सिद्धान्तशैववत् स्वीकरोति। परन्तु चेतनाचेतनरूपस्य चिदचिदपरपर्यायस्य लकुलीशमते कार्यान्तर्गणितस्य जीवजगद्द्वयस्य पत्युर्बहिः स्वतन्त्रां सत्तां न स्वीकरोति, अपि तु लाकुलीशभेदाभेदवत् पतिशक्तिस्थत्वम्। एवञ्च हार्य-धार्य-कार्यतया पत्या सह समप्राधान्यं निरस्य चिदचितोः पशुपाशयोः पतिं प्रति गौण्यं स्वीकरोति। शरीरस्येव शरीरिणं प्रति। यदाह राशीकरः—

"कार्यस्य रुद्रे-हार्य-धार्य-कार्यख्यापनार्थम्" (पा० सू० पृ० ६४) इति।

(ग) कार्यकारणयोरपृथक्सिद्धत्वम्। श्रीकण्ठमते कार्यकारणयोर्न पृथक्सिद्धिः।

एवञ्च ब्रह्मणोऽपृथक्सिद्धजन्मस्थितिप्रवृत्तिकत्वादस्य जगतस्तद्व्यतिरिक्तता नास्ति। इदं लकुलीशमतानुसार्येव। यथाह राशीकरः—

पालको नित्यः पालकनित्यत्वाच्च पाल्यमपि नित्यम्। कस्मात्? नह्यसति पाल्ये पालक इत्येव। सति नित्यत्वे तान्येव पश्वादीनि संयोजयति, मृल्लोहमयप्राकारादिवत्, दृष्टान्तात्। वृत्तिलाभश्चोत्पत्तिरित्युच्यते। (पा० सू० पृ० ६०)

(घ) अन्तर्गणिकभेदः। गणः—समूहः, अन्तर्विद्यमानो गणः अन्तर्गणः, अन्तर्गणे विद्यते इत्यन्तर्गणिकः। अन्तर्गणिकश्चासौ भेदोऽन्तर्गणिकभेदः। अन्तःपूर्वकाद्गणशब्दाद् "अत इनिठनौ" इति सूत्रानुसारं ठन्प्रत्यये अन्तर्गणिक इति निष्पद्यते। एवं चान्तर्गणिको भेदः शिवान्तर्गतपशुपाशरूपगणनिष्ठः। स च श्रीकण्ठेन स्वीक्रियत इत्यप्पय्यदीक्षितकृतश्रीकण्ठ-भाष्यटीकाद्वयानुसारं प्रतिभाति। यतस्तथाविधो भेदोऽपृथग्भावेनाऽनन्यत्वरूपविशिष्टाद्वैतमतस्य न विरोधी। यथाह—

"भेदाभेदपक्षस्य पृथग्भावरूपात्यन्तभेदपक्षस्य मुख्याभेदरूपात्यन्ताभेदपक्षस्याऽन्यतराऽनिर्धार्यत्वपक्षस्य च प्रमाणविरुद्धत्वाल्लौकिकवैदिकसकलप्रमाणसिद्धान्तर्गणिकभेदाऽप्रतिक्षेपकमपृथग्भावेनानन्यरूपं विशिष्टाद्वैतमभेदश्रुतीनामर्थ इत्येव सूत्रकारस्याभिप्रायः" (श्रीकण्ठभा० टी० ३१) इति।

इममन्तर्गणिकं भेदं रामानुजाचार्यः स्वगतभेदनाम्ना स्वीकरोति।

## द्वैतशैवसिद्धान्तप्रभावः

व्याख्यातांशेषु लाकुलीशदर्शनप्रभावितोऽपि श्रीकण्ठो न सर्वथा द्वैतशैवसिद्धान्तप्रभाव-शून्यः। न केवलं ततः पति-पशु-पाशसंज्ञकं पदार्थत्रयमादत्तेऽपि तु जीवस्याणुत्वं मोक्षस्य शिव-साम्यरूपत्वं मोक्षे सर्वज्ञत्वसर्वकर्तृत्वयोरभिव्यक्तिवादञ्च।

अत इदं स्पष्टीभवति यत्सृष्टौ स्थूलरूपतया प्रलये च सूक्ष्मरूपतया पत्यन्तर्गतयोर्हार्य-धार्य-कार्यतयाऽस्वतन्त्रयोरत एव गौणयोः पत्यविनाभूतयोः पत्यपृथक्सिद्धयोः परस्परभिन्नयो-र्जडचेतनयोः पत्यविनाभूतायाः शक्तेश्च विशेषणत्वमात्रकथनं लकुलीशभेदाभेदवादात् श्रीकण्ठविशिष्टाद्वैतं विशेषयति। रामानुजीयविशिष्टाद्वैतमप्येवमेव।

## रामानुजीयविशिष्टाद्वैतमुख्यांशाः

रामानुजः स्वगुरुयादवप्रकाशाभ्युपगतं चिदचिदीश्वरकारणं ब्रह्म न मनुते, यद्यपि चिदचिदीश्वररूपं त्रिकं स्वीकरोति। एतत्सिद्धान्ते ब्रह्म नेश्वरात् पृथक्। ईश्वर एव परमकारणं परमद्रव्यं च। सत्कार्यवादानुसारं सर्वं कार्यं कारणे सूक्ष्मरूपेण सत्, परिणामश्चावस्थान्तरा-

पत्तिरेव, अवस्थान्तरापत्तिरेव च कार्यता। स्वगतभेदः, अपृथक्सिद्धिसम्बन्धः, विशेषणलक्षणमिति शिलात्रयाश्रितो रामानुजविशिष्टाद्वैतवादः।

## (१) ईश्वरः

सर्वोऽप्यनुभवः सगुणसविशेषवस्तुविषयकः, सर्वाण्यपि प्रमाणानि सविशेषविषयकाणि। निर्विशेषवस्तुनि न किमपि प्रमाणं समस्ति। निर्विकल्पकप्रत्यक्षे सविशेषमेव वस्तु प्रतीयते। यथोक्तमुत्पलदेवपादैः—

साक्षात्कारक्षणेऽप्यस्ति विमर्शः कथमन्यथा।
धावनाद्युपपद्येत अनुसन्धानवर्जितम्॥ इति।

अतो निर्गुणब्रह्मकल्पनामनुभवविरुद्धां प्रमाणासाध्यां च मन्यमानो रामानुजो ब्रह्म सगुणमीश्वरापरपर्यायञ्च मनुते।

एवञ्चेश्वरः प्राकृतगुणरहितः, निखिलहेयप्रत्यनीकः, कल्याणगुणाकरः, अनन्तज्ञानानन्दस्वरूपः, कल्याणगुणविभूषितः, स्वेच्छया सकलजगत्सृष्टिसंहारकर्ता, सकल-सजातीय-विजातीय-भेदशून्योऽपि स्वगतभेदवान्; अपृथक्सिद्धिसम्बन्धसम्बद्धयोरत एव स्वशरीरभूतयोश्चिदचितोः परस्परतः सर्वथा भिन्नत्वात्।

## (२) अपृथक्सिद्धिसम्बन्धः

रामानुजीया अपृथक्सिद्धिसम्बन्धकल्पनैव तदीयविशिष्टाद्वैतसिद्धान्तस्याधारभूता। अतो विवरणमपेक्षते। रामानुजसिद्धान्ते शरीरिरूपा चित् कदाचिदपि शरीरात् पृथङ् न भवति, संसारावस्थायां स्थूलशरीरेणेव प्रलये सूक्ष्मशरीरेण तथा मोक्षेऽपि शुद्धसत्त्वशरीरेण चितः सम्बन्धस्य स्वीकारात्। शरीरं शरीरिणा धार्यते, नियम्यते, स्वोपभोगार्थं कार्ये प्रवर्त्यते च। अतः शरीरस्य शरीरिणेव चिदचितोरीश्वरेण सहाभ्युपगम्यते सम्बन्धः। यत ईश्वरः शरीरीव शरीरं चिदचितौ धारयति नियमयति प्रेरयति च। अयं च सम्बन्धः अपृथक्सिद्धिरित्युच्यते। नास्ति पृथक्सिद्धिर्ययोर्येषां वा तयोस्तेषां वा सम्बन्धोऽपृथक्सिद्धिसम्बन्धः। ईश्वरः कदाचिदपि चिदचिद्भ्यां पृथग् न भवति, नापि चिदचितावीश्वरात्। अयं सम्बन्धो न्याय-वैशेषिकाभ्युगतात् समवायसम्बन्धाद् भिन्नः। समवायो नित्यसम्बन्धोऽयुतसिद्धवृत्तिः, यथा गुण-गुणिनोः। यतो गुणः सर्वदा गुणिसम्बद्ध एव भवति। गुणी च गुणसम्बन्धं विना गुणी एव न वक्तुं शक्यते। परन्तु न्यायवैशेषिकसिद्धान्त उत्पद्यमानं द्रव्यं प्रथमक्षणे निर्गुणं निष्क्रियञ्च भवती-

त्यंतः कथञ्चित् कदाचिदीश्वरस्यापि निर्गुणत्वं संभाव्येत । अत ईश्वरस्य चिदचिद्भ्यां सह न समवायसम्बन्धः स्वीक्रियते । तथा चैकस्यापि गुणस्य भिन्नैर्गुणिभिः सम्बन्धो भवति, नीलाख्यो गुणो न केवलमुत्पल एव भवति, अपि तु वस्त्वन्तरे घटादावपि । अतो गुणिन ईश्वरस्य चिदचिद्भ्यां न भवति कदाचिदपि विच्छेदः, नापि चिदचितावीश्वराद्बहिस्थेन केनाप्यपरेण कदाचिदपि सम्बद्धे भवतः, बाह्यस्य कस्याप्यभावादिति साधयितुमपृथक्सिद्धिसम्बन्धः स्वीक्रियते ।

## ३. विशेषणस्वरूपम्

अपृथक्सिद्धिसम्बन्धसम्बद्धेषु यन्नियमेनाधेयं नियम्यं नियोज्यं च भवति, तद्गौणं भवतीति विशेषणमित्युच्यते । आधारो नियामको नियोजकश्च मुख्यो भवतीति विशेष्यमित्युच्यते । चिदचिदीश्वरेष्वीश्वरस्य नियामकत्वात् प्राधान्यं विशेष्यत्वञ्च, चिदचितोस्तु नियम्यत्वाद्गौणत्वं विशेषणत्वञ्च । एवं विशेष्यभूतस्येश्वरस्य चिदचितौ विशेषणभूते ।

## ( ४ ) अद्वैतम्

"एकत्वं चापृथक्सिद्धिः" इति रामानुजाभ्युपगमः । अतश्चिदचिदीश्वराणामपृथक्सिद्धिसम्बन्धसम्बद्धत्वाद् विशिष्टस्येश्वरस्याद्वैततामेकत्वमभेदं वा रामानुजस्तथैव मनुते, यथा विज्ञानवादिनः सहोपलम्भनियमान्नीलनीलधियोरभेदं मन्वते, "सहोपलम्भनियमादभेदो नीलतद्धियोः" इति हि तेषां सिद्धान्तः । अतः शरीरस्य शरीरिणेव, विशेषणस्य विशेष्येणेव, अंशानामंशिनेव चिदचितोरीश्वरेण सह अपृथक्सिद्धिसम्बन्धस्वीकाराद् अपृथक्सिद्धयोश्चैकत्वस्वीकाराद्रामानुजसिद्धान्तो विशिष्टाद्वैतमित्युच्यते ।

## ( ५ ) स्वगतभेदः

चिदचितौ जगज्जीवौ नित्यौ परस्परतो भिन्नौ च । परन्तु तयोर्भेदस्तयोः साधारणाधारभूतेश्वरान्तरान्तर्गत एव । तयोर्न स्वतन्त्रेश्वराद् बहिः सत्ता । ईश्वर एव ते परस्परतो भिन्नतयाऽवतिष्ठेते । अतो भेदोऽपीश्वरान्तर्गत एव । अयमेव भेदः स्वगतभेद इत्युच्यते । एवमीश्वरः सजातीयविजातीयभेदरहितोऽपि न स्वगतभेदरहितः ।

इमौ जगज्जीवावीश्वरेऽवस्थाद्वयेनावतिष्ठेते, स्थूलावस्थया सूक्ष्मावस्थया च । सृष्टौ तयोः स्थूलावस्थया स्थितिः, अतः स्थूलचिदचिच्छरीरस्तद्विशिष्टो वेश्वरः कार्यावस्थं ब्रह्म, प्रलये तयोः

सूक्ष्मतया स्थितिः, अतः सूक्ष्मचिदचिद्विशिष्ट ईश्वरः कारणावस्थं ब्रह्मेत्यभिधीयते। एवं चेश्वरः कदाचिदपि न विशेषणशून्यः। अतः परमतत्त्वस्य सर्वदा सविशेषत्वस्वीकाराद् रामानुजीयदर्शनं विशिष्टाद्वैतमित्युच्यते।

### स्वगतभेदस्वीकारस्य महत्त्वम्

न्यायवैशेषिकनये पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोरूपाणां सतद्रव्याणां परस्परतः सर्वथा पृथक्स्थितिर्भेदश्च स्वीक्रियते, न च तेषां कश्चन एक आधारः स्वीक्रियते। अतस्तन्नये सर्वस्यापि संयोगस्य संयुज्यमानयोरेकाधारत्वे सत्येव संभवात्। न च पृथक्परिक्षीणस्रोतोद्वयोह्यमानानां तृणोपलादीनां संभवति कश्चन संयोगः, अतो जडचेतनयोरेकाधारस्यास्वीकरणाद् न संभवति जडचेतनयोः संयोगसम्बन्धाश्रितं प्रत्यक्षज्ञानमपि। परन्तु रामानुजमत एकाश्रयस्वीकारादस्य सम्भव इति स्वगतभेदस्वीकारो विशिष्टाद्वैतदर्शनं द्वैतदर्शनेभ्य उत्कर्षयति।

### प्रमाणप्रमेये

प्रत्यक्षानुमानशब्दरूपं त्रिविधं प्रमाणम्। प्रमेयञ्च द्विविधं द्रव्याद्रव्यभेदात्। द्रव्यम् उपादानम्। अवस्थाश्रयं चोपादानम्। तच्च षड्विधम्, प्रकृतिकालशुद्धसत्त्वधर्मभूतज्ञानजीवेश्वरभेदात्। अद्रव्याणि दश।

### श्रीकण्ठरामानुजविशिष्टाद्वैतयोः साम्यम्

लकुलीशपाशुपतसूत्रतट्टीकाभ्यां ग्रन्थांशान् समुद्धृत्य प्रदर्शितमिदं यच्छ्रीकण्ठो लाकुलीशद्वैताद्वैतवादानुसारं ब्रह्मणः सगुणत्वम्, सत्कार्यवादम्, कार्यकारणयोरपृथक्सिद्धत्वम्, अन्तर्गणिकभेदम्, पशुपत्योः कार्यकारणयोर्वा गुणप्रधानभावं स्वीकृत्य गौणयोः पत्यविनाभूतयोः पत्यपृथक्सिद्धयोः परस्परभिन्नयोर्जडचेतनयोः पशुपाशनाम्नोः पत्यविनाभूतायाश्च शक्तेर्गुणरूपत्वमनुक्त्वा गुणं विशेषणं भवतीति मत्वा विशेषणरूपत्वमभ्युपगत्य शैवविशिष्टाद्वैतं स्थापितवान्। अतो लकुलीशद्वैताद्वैताचिदचितोः पशुपाशयोरीश्वरापरपर्यायेण पत्या सह सम्बन्धविषये नास्ति कश्चन भेदः।

रामानुजविशिष्टाद्वैतविषय इदमेव तथ्यम्। यतो रामानुजोऽपि श्रीकण्ठवत् सत्कार्यवादम्, कार्यरूपयोश्चिदचितोरीश्वरेणापृथक्सिद्धिसम्बन्धस्वीकृत्याऽपृथक्सिद्धत्वम्, ईश्वरे 'स्वगतभेद' इति नामान्तरेणान्तर्गणिकभेदम्, चिदचितोरीश्वरापेक्षया गौण्यात्तयोरीश्वरविशेषणत्वं च स्वीकरोति।

## उपसंहारः

द्वैतमते परस्परतः स्वरूपेण भिन्नयोरनेकाश्रययोश्चिदचितोः सम्बन्धस्यासंभाव्यमानत्वात् सम्बन्धनिर्भरस्य सर्वव्यवहाराधारभूतस्य प्रत्यक्षस्य नास्ति संभवः। तयोरेकाश्रयस्वीकृत्या सम्बन्धोपपादने प्रत्यक्षं सम्भावयति भेदाभेदवादो विशिष्टाद्वैतवादश्चेति भेदवादादुत्कृष्टौ भेदाभेदवादविशिष्टाद्वैतवादौ। परन्तु चिदचितोस्तात्त्विकं भेदं स्वीकृत्याऽचितश्चिदन्तःस्थितत्वाभ्युपगमोऽनुभवविरुद्धः। नहि चित्स्वरूप आत्मन्यचित्स्वरूपस्य स्थाणोः स्थितिरनुभूयते। यतोऽनुभूयमानश्चित्स्वरूप एव, विज्ञान( Idea )रूपत्वात्। अतश्चिदचितोस्तात्त्विकं भेदं निराकुर्वाणोऽद्वैतवादः साधीयान्।

अयं चाग्रिमे व्याख्याने प्रतिपादयिष्यते।

॥ ओऽम् शान्तिः शान्तिः शान्तिः ॥



# शैवाद्वैतदर्शनम्

डॉ० कान्तिचन्द्रपाण्डेयः, लक्ष्मणपुरम् ।

मान्याः सभापतिमहोदयाः समुपस्थिताश्च विद्वद्वरेण्याः !

शैवद्वैताद्वैतविषयकद्वितीयव्याख्यानोपसंहारे द्वैताद्वैतवादस्य द्वैतवादादुत्कर्षः साधितः, द्वैतवादे परस्परतः सर्वथा भिन्नयोः पृथक्सत्ताकयोरेकाश्रयरहितयोर्जडचेतनयोः समानान्तर-रेखयोरिव प्रत्यक्षज्ञानापेक्षितस्य संयोगस्याऽसम्भवात्; भेदाभेदवादे च चिदचितोरेकाश्रय-स्वीकृतया तत्सम्भवात्। परन्तु पत्यपरपर्याये ईश्वरे चित्स्वरूपे सगुणे ब्रह्मण्यचित्सत्ताभ्युपगमोऽ-नुभवविरुद्धः, नहि कश्चनापि चिद्रूपे स्वात्मनि जडघटपटाद्यनुभवकालेऽपि जडविषयमात्म-प्रविष्टतयाऽनुभवति, अपि तु प्रकाशरूपज्ञानाकारतया। इदञ्च नातिदूरे स्पष्टीकरिष्यते। अपरञ्च चित्स्वरूपे पत्यामचितो जडस्य स्थितिर्जीवति शरीरे शूलस्येवारुन्तुदत्वान्नावर्जयति सद्दार्शनिकमनांसि। ज्ञानमीमांसायां क्रियमाणायां चेतनस्य परिमितात्मनो दीपप्रभाया घटेनेव कथञ्चन संभवत्यपि द्वैतनयेऽचेतनेन, द्वैताद्वैतनये चाप्रकाशरूपेण विषयेण सम्बन्धे, कथमप्रकाशरूपो विषयः स्वीयमप्रकाशस्वभावं परित्यज्य प्रकाशरूपज्ञानाकारीभवतीति न शक्यते समाधातुम्, स्वभावभूतस्याप्रकाशत्वस्य त्यक्तुमशक्यत्वात्। नहि स्वभावः शक्यते परित्यक्तुम्। नह्यग्नि-र्जहात्युष्णत्वम्। अतो न युक्तियुक्तश्चिदचितोस्तात्त्विकभेदस्वीकार इति चिदद्वैतमाश्रित्यैव प्रत्यक्ष-ज्ञानस्यापि सम्भवादद्वैतदर्शनमेव सर्वदर्शनमूर्धन्यमित्यागमिकानामद्वैतवादिनां मतम्।

एकमद्वितीयं परं तत्त्वं शून्यवादिभिर्विज्ञानवादिभिश्च बौद्धैः, गौडपाद-शङ्करप्रभृतिभि-र्वेदानुयायिभिः, भर्तृहरि-पुण्यराज-हेलाराज-नागेशभट्टादिभिर्वैयाकरणैः, वल्लभाचार्येण वैष्णवेन, माहेश्वरसूत्रदार्शनिकव्याख्याकर्त्रा नन्दिकेश्वरेण, शक्त्यद्वयवादिभिः काश्मीरशाक्तैः, शैवागमानु-यायिस्वातन्त्र्यवादिभिः काश्मीरशैवैश्च स्वीकृतं समर्थितं च विभिन्नाभिर्युक्तिभिर्विभिन्नेभ्यो दृष्टिकोणेभ्यः। अस्मिंस्तु व्याख्याने शैवाद्वैतमेव प्रतिपादनीयम्।

## चत्वारि शैवाद्वैतदर्शनानि

शैवागमाश्रितानि चत्वारि दर्शनान्युपलभ्यन्ते—(१) नन्दिकेश्वरदर्शनम्, (२) प्रत्यभिज्ञा-दर्शनम्, (३) क्रमदर्शनम्, (४) कुलदर्शनं च। इमानि सर्वाण्यप्यद्वैतं प्रतिपादयन्ति। प्रत्येक-

मितिहासो भिन्नः, अवतारकः प्रचारको वापि भिन्नः, तथा च दार्शनिकं साहित्यमपि पृथक्। अतः पारस्परिकभेदप्रदर्शनाय प्रत्येकं दर्शनं सेतिहासं दार्शनिकसाहित्योपन्यासपुरःसरं व्याख्यानमपेक्षते।

## नन्दिकेश्वरदर्शनम्

अद्वैतशैवदर्शनेतिहासे नन्दिकेश्वरकृतं माहेश्वरसूत्रदार्शनिकव्याख्यारूपं नन्दिकेश्वरदर्शनं प्रथमं स्थानमलङ्करोति। नन्दिकेश्वरविषये परम्परागतमिदं वृत्तमुपमन्युकृतायां नन्दिकेश्वरकाशिकाटीकायां समुपलभ्यते।

नन्दिकेश्वरव्याघ्रपादादीनुद्धर्तुकामः शिवो डमरुनिनादव्याजेन पाणिन्यष्टाध्यायिप्रारम्भोपलभ्यमानं चतुर्दशसूत्रात्मकं तत्त्वमुपदिदेश। सूत्रजातस्य तत्त्वार्थं बोद्धुमसमर्था व्याघ्रपादादयो नन्दिकेश्वरं तत्त्वार्थं विवरीतुं प्रार्थयामासुः। स च सूत्रनिक्षिप्तं रहस्यार्थं षड्विंशतिकारिकाभिरुपदिदेश।

नन्दिकेश्वरेण माहेश्वराणां चतुर्दशसूत्राणां व्याख्यानं शैवाद्वैतस्थापनार्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थं चेति प्रकारद्वयेन कृतम्। तत्र चैकैव कारिका पाणिन्यादिवैयाकरणानां कृते। यथाह—

अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दशम्।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥ इति।

शेषास्तु शैवाद्वैतप्रतिपादनपराः।

## नन्दिकेश्वरकाशिकायाः प्रामाण्यं समयश्च

नागेशभट्टः स्वीयोद्योते 'ॠ ऌ क्'-सूत्रभाष्यव्याख्यानावसरे—

"चतुर्दशसूत्री अनेकर्षीणां नानाविधार्थजिज्ञासानिवृत्तये शिवेन प्रकाशिता, तस्याश्च पाणिन्याद्युद्देश्यकमपि फलम्, अन्त्यवर्णचतुर्दशं पाणिन्याद्युद्देशेनैवोपदिष्टम्, इदञ्च तत्रैव स्पष्टम्।"

इत्यादि वदन् नन्दीश्वरापरनामनन्दिकेश्वरकृतकाशिकाप्रामाण्यं स्वीकरोति, मनुते च नन्दिकेश्वरं पाणिन्युपदेष्टारम्। पतञ्जलिरपि स्वीयमहाभाष्ये चतुर्दशसूत्र्या अद्वैतशैवदर्शनानुसारिणीं नन्दिकेश्वरकृतां व्याख्यां प्रामाणिकीं मन्वानः—"सोऽयमक्षरसमाम्नायो ब्रह्मराशिः" इत्युक्तवान्।

## शैवाद्वैतदर्शनम्

समर्थ्यते चेदं मतम् 'ब्रह्मराशिः' इत्यस्य—

"ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीति"

इति कैयटकृतेन व्याख्यानेन। स्पष्टीक्रियते चैतन्नागेशभट्टेनैतदंशव्याख्याने—

"अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः"

इति नन्दिकेश्वरकारिकामुद्धरता। एवञ्च नन्दिकेश्वरः पाणिनिगुरुरासीदिति सिध्यति।

## नन्दिकेश्वरशैवाद्वैते मुख्या दार्शनिकविचारधाराः

### (क) स्वातन्त्र्यवादः

प्रत्येकं दर्शनम्—किमस्य जगतस्तात्त्विकं स्वरूपम्? कुत इदम्? किन्निमित्तमिदम्? इति प्रश्नान् समाधातुं यतते तांश्चाद्वैतिनः—

"तत्त्वतः परतत्त्वैकस्वरूपं सर्वमिदम्, परतत्त्वादेवोद्भवति, परस्य क्रीडाशीलत्वात्"

इति प्रायः साधारणतया समादधते। परन्तु परतत्त्वस्वरूपे एवञ्च प्रतीयमानस्य वस्तुजातस्य सत्यत्वविषये तेषां महान् विवादः।

नन्दिकेश्वरनये 'अ इ उ ण्' इति सूत्रे प्रथमो वर्णः 'अ' इति निर्गुणब्रह्मवाचकः, इकारः स्वातन्त्र्यापरपर्यायचित्कलावाचकः, उकार ईश्वरवाचकः, णकारश्च 'आसीत्' इति क्रियावाचकः। एवञ्च परमयोगिनाम् अव्यतिरेकतुरीयातीतसमाधौ निर्गुणतया प्रकाशमानो ब्रह्मापरपर्यायः शिवः प्रकाशविमर्शरूपोऽपि विश्वोत्तीर्णस्वरूपे न्यग्भावितविमर्शतया प्रकाशैकघनः 'अ' इति निर्दिष्टः। स एव न्यग्भावितप्रकाशतया चिति सत्ता-विमर्श-स्वातन्त्र्यादिपर्यायस्वशक्तिप्राधान्येन पश्यन्त्याद्या वाचः सकलजडाजडात्मकं वाच्यं चाभासयन् विश्वरूप ईश्वर इत्युच्यते। एवं जगत्सृष्टिप्रसङ्गे स्वातन्त्र्यशक्तिप्रधानस्य शिवस्य स्रष्टृत्वाभ्युपगमात् स्वातन्त्र्यवादी नन्दिकेश्वर इति सुस्पष्टम्।

## काश्मीरिकाद्वैतशैवैर्नन्दिकेश्वरस्वातन्त्र्यवादानुसरणम्

नन्दिकेश्वरप्रतिपादितः स्वातन्त्र्यवादः काश्मीरिकाद्वैतशैवैः स्वीकृत इति स्पष्टीभवति—"स्वेच्छया स्वस्य चिद्भित्तौ विश्वमुन्मीलयत्यसौ" इति नन्दिकेश्वरवाक्यस्य "स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" इति प्रत्यभिज्ञाहृदयस्थक्षेमराजवाक्येन सह तुलनायां क्रियमाणायाम्। यत इह न केवलं विचारसाम्यमपि तु शब्दसाम्यमपि।

( ख ) अद्वैतवादः

अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ।
चित्कलामिं समाश्रित्य जगद्रूप उदीरितः ॥

इति कारिकायां ब्रह्मणश्चित्कलाश्रयणप्रतिपादनात्, ब्रह्मचित्कलयोराश्रयाश्रयिभावसंबन्ध-स्वीकारात्, संबन्धस्य च द्विष्ठत्वात्, नन्दिकेश्वरनयेऽद्वैतवादो दुःसमर्थ्य इत्याक्षेपस्य समाधानम् 'ऋ ऌ क्' इति सूत्रव्याख्यायामित्थमुपलभ्यते—

ऋ ऌ क् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत् ।
तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत् ॥ इति ।

अत्र 'माया'-मनोवृत्ति'-शब्दयोरर्थो निर्णेतव्यः । यतो नन्दिकेश्वरेण माया तत्त्वेषु न गणिता । नापि वेदान्तिसम्मतः—

"मिथ्याज्ञानकारणं सदसद्भ्यामनिर्वचनीया माया"

इत्यर्थस्तत्र संघटते, एवंविधस्यार्थस्य स्वातन्त्र्यवादविरुद्धतयाऽस्वीकार्यत्वात् । न च मनःशब्दस्यान्तरिन्द्रियापरपर्यायत्वं शक्यते स्वीकर्तुम्, मनसस्तद्वृत्तेश्च परिमितप्रमातर्येव सम्भवात् । ऋवाच्यः परमेश्वरः परमशिवो वा—

"मनोवृत्तिमदर्शयत्"

इति कथनस्यायुक्तत्वापत्तेः ।

इह मनोमायाशब्दौ चित्कलापर्यायावित्युपमन्युकृतनन्दिकेश्वरकाशिकाटीकाया उपरि दृष्टिपाते क्रियमाणे स्पष्टीभवति । उपमन्युर्हि 'अ इ उ ण्' सूत्रे इवर्णनिर्दिष्टां चित्कलां 'मायाम्' इति व्याचख्यौ । यथाह—

"इं मायामाश्रित्य" इति ।

मनश्चित्योश्चैकार्थवाचकत्वं महाभारतीयवचनात् स्पष्टीभवति—

मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ।
प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते ॥ इति ।

नन्दिकेश्वरवचांस्यपि मायाशब्दश्चित्कलापरपर्याय इति मतं समर्थयन्ति । तन्नये ह्यकारो ब्रह्मवाचकः, ब्रह्म च प्रकाशरूपमिकारवाच्यायाश्चित्कलायाः स्थूलदृष्ट्या भिन्नमपि तयाऽभेद-सम्बन्धसंबद्धम् ।

चित्कला हि शक्तिरूपा, वाच्यवाचकात्मनो जगतः कारणं परं ब्रह्म सन्निधीकृत्यैव इच्छा-स्वातन्त्र्यविमर्शादिभिः शब्दैरप्यभिधीयते । एवञ्च इच्छाया एष्टुरिव, स्वातन्त्र्यस्य कर्तुरिव, विमर्शस्य विम्रष्टुरिव, चन्द्रिकायाश्चन्द्रमस इव, वाचोऽर्थादिव न चित्कलायाः प्रकाशरूपाद् ब्रह्मणः पार्थक्यं भेदो वा वास्तविकः । यथाह—

वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ।
चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरिव ॥ इति ।

( ग ) प्रत्ययवादः

नन्दिकेश्वरो जगतः प्रत्ययमात्रत्वं प्रतिपादयति, स्वीकरोति च परां ब्रह्मस्वरूपां पश्यन्त्यादिवाक्त्रयोर्ध्ववर्तिनीं पश्यन्त्यादिक्रमेण च सकलवाच्यवाचकात्मकजगत्स्वरूपेण विशेषेण वर्तमानाम् । यथाह—

सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् । इति,
ऐ औ च् ब्रह्मस्वरूपः सन् जगत् स्वान्तर्गतं ततः ।
इच्छया विस्तरं कर्तुमाविरासीन्महामुनिः ॥ इति च ।

अतः स्वाप्नपदार्थानां संस्कारोद्बोधजनितत्वाद् विषयतयाऽवभासमानानामपि विषय्येक-रूपत्वमिव, कवेः स्वतन्त्रोल्लेखानां प्रतिभोद्भूतत्वाद् वैविध्येन भासमानानां कविशक्त्येकरूपत्व-मिव, योगिसृष्टेर्योगिशक्त्युद्भावितत्वात् सर्वैः साधारण्येनानुभूयमानाया अत एव च स्वाप्न-पदार्थवदसत्येति वक्तुमशक्याया योगिशक्त्यैकत्वमिव ज्ञप्तिरूपया परयाऽवभासमानं सर्वमिदं जगद् ज्ञप्तिमात्रं प्रत्ययमात्रं वेति स्पष्टम् । एवञ्च भिन्नतयाऽवभासमानानां घटपटाद्यर्थानां ज्ञप्ति-मात्ररूपत्वात् परमार्थत ऐक्यमेवेत्यद्वैतवादिनो नन्दिकेश्वरस्य सिद्धान्तः ।

( घ ) निर्गुणसगुणयोर्ब्रह्मेश्वरयोरैक्यम्

ब्रह्मचित्कलयोरभेदः प्राक् साधितः । ईश्वरस्वरूपप्रतिपादने चोक्तम्—अकाररूपं शिवा-परपर्यायं निर्गुणं ब्रह्मेकाररूपां चित्कलां समाश्रित्य ईश्वरो बभूव । ईश्वरश्च सर्वैर्वादिभिः सगुणः स्वीक्रियते । इहापि च चित्कलारूपगुणसमाश्रयणात् सगुण एव प्रतिपाद्यते ।

सगुणनिर्गुणयोः परस्परविरुद्धत्वादैक्यासम्भवाद् नन्दिकेश्वरमते द्वैतापत्तिः स्पष्टा । अस्या निवारणं ब्रह्मचित्कलयोश्चाभेदसाधकमभ्युच्चययुक्तिप्रदर्शनम् 'ए ओ ङ्' इति सूत्र-व्याख्यायामुपलभ्यते ।

यथा वैयाकरणनयेऽकारेकारसंयोगजस्य एकारस्य कण्ठतालुरूपस्थानद्वयजन्यत्वाद् विश्लेषणदृष्ट्या सत्यपि द्व्यक्षरत्वेऽनुभवदृष्ट्यैकाक्षरत्वम्, तथैव ब्रह्मचित्कलयोर्दार्शनिकविश्लेषण-दृष्ट्याऽभ्युपगम्यमानेऽपि भेदे तत्त्वतोऽनुभवदृष्ट्यैकत्वमेव । यथा वाऽकारोकारसंयोगजस्य ओकारस्यैकाक्षरत्वं न केवलं वैयाकरणैरपि तु—

"ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्"

इति गीतावाक्यम् ।

"तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्"

इति कठोपनिषद्वाक्यं चानुसरद्भिर्वेदान्तिभिरपि मन्यते, तथैव शैवैरप्यकारोकारवाच्ययो-र्निर्गुणसगुणब्रह्मणोरेकत्वं प्रतिपाद्यते ।

**( ङ ) षट्त्रिंशत्तत्त्वानि**

षट्त्रिंशत्तत्त्वानि द्वैत-द्वैताद्वैत-अद्वैतप्रतिपादकैर्बहुभिः शैवदर्शनैः स्वीक्रियन्ते, तथापि तानि विभिन्नैर्नामभिर्विभिन्नपदार्थाख्यायिभिर्निर्दिष्टानि । नन्दिकेश्वरनये तानीमानि—

( १ ) शिवः, ( २ ) शक्तिः, चित्कला माया वा, ( ३ ) ईश्वरः, ( ४-८ ) पञ्चतन्मात्राः, ( ९-१३ ) पञ्चभूतानि, ( १४-१८ ) पञ्चज्ञानेन्द्रियाणि, ( १९-२३ ) पञ्चकर्मेन्द्रियाणि ( २४-२८ ), पञ्चप्राणाः ( २९-३० ), प्रकृतिपुरुषौ ( ३१-३३ ), त्रयो गुणाः ( ३४-३६ ), अन्तः-करणत्रयं चेति ।

**( च ) तत्त्वोत्तीर्णः परः शिवः**

परं तत्त्वं परमशिवपरब्रह्मापरपर्यायं षट्त्रिंशत्तत्त्वोत्तीर्णमिति 'हल्' इति चतुर्दशसूत्र-व्याख्यायामुक्तम् । इदमेवाभिनवगुप्तपादानां मते प्रत्यभिज्ञादर्शने सप्तत्रिंशं तत्त्वं यथाग्रे व्याख्यास्यते ।

## स्वातन्त्र्यवादी पाणिनिः

पाणिनिः स्वातन्त्र्यवादं मनुते स्म इति स्पष्टीभवति 'कारके' इति, 'स्वतन्त्रः कर्ता' इति च सूत्रयोः पतञ्जलिकृतभाष्यस्योपरि दृष्टिदानेन । तत्रत्या च विचारधारा संक्षिप्तरूपेणैवम्—

उभावपि कर्तृकारकशब्दावेकस्मादेव करणार्थाद् डुकृञ्वादिगणान्तात् 'कृ'धातोः 'ण्वुल्तृचौ' इति सूत्रेण क्रमशः कृततृज्ण्वुलप्रत्ययान्तान्निष्पन्नावेकार्थावेव । अतः—

"अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः"

इत्युद्घोषयन्तो व्याकरणशास्त्रविदः, 'कर्तृकारकम्' इति वदन्तः कथं न व्यर्थपुनरुक्ति-दोषभाजः। इमं प्रश्नं समाधातुं कर्तृकारकशब्दयोर्वैयाकरणस्वीकृतः पारस्परिकोऽर्थभेदः सर्वतः प्रथमं निर्णयमपेक्षते।

## कारकशब्दार्थः

उपर्युक्तः प्रश्नः 'कारके' इत्यस्य 'स्वतन्त्रः कर्ता' इत्यस्य च सूत्रस्य व्याख्याने एवमुत्थापितः, समाहितश्च महाभाष्ये, तस्य च कैयटकृते प्रदीपे—

करोतीति कारकमित्यन्वर्थसंज्ञा चेत् तदा स्वतन्त्रस्यैव कर्तृसंज्ञावत् कारकसंज्ञापि प्राप्नोति, न तु करणाधिकरणादीनामस्वतन्त्राणाम्। मैवम्। यद्यपि समूहरूपा क्रिया प्रतिकारकं न भिन्ना, तथापि स्वव्यापारे सर्वेषां कारकाणां स्वातन्त्र्यात्, तदनुष्ठानेन प्रधानक्रियायामुपयोगित्वात्, कर्तृसन्निधावपि स्वव्यापारस्याऽनिवर्तनात्, पारतन्त्र्यावस्थायामप्यनिवृत्तं कारकत्वं करणाऽधिकरणादीनाम्। एवञ्च स्वव्यापारे स्वातन्त्र्यात् कारकत्वम्, पच्यादिवाच्यसमूहं प्रति पारतन्त्र्यात् करणत्वञ्च। यद्यपि—

"देवदत्तः काष्ठैः स्थाल्यामोदनं पचति"

इत्यादौ करणाधिकरणाद्यनुष्ठेयानां क्रियाणां पचिधात्वर्थत्वं नास्ति, तथापि कृधात्वर्थत्वाक्षतेः करणादीनामपि कारकत्वं सूपपादमेव।

अयं हि भगवतो पतञ्जलेरभ्युपगमः—सर्वेषां कर्तृभिन्नानां कारकाणां स्वातन्त्र्यं पारतन्त्र्यं च पर्यायेण। उद्भूतस्वातन्त्र्यविवक्षायां कर्तृसंज्ञा, यथा 'स्थाली पचति' इति। उद्भूतपारतन्त्र्यविवक्षायां तु न्यग्भावात् सदपि स्वातन्त्र्यं स्वकार्ये न प्रयुङ्क्ते यथा—

'स्थाल्यां पचति' इत्यत्र।

प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये तु स्वतन्त्रा। यथा अमात्यानां राज्ञा सह समवाये पारतन्त्र्यम्, व्यवाये तु स्वातन्त्र्यम्। समवाये च कर्ता प्रधानम्, सर्वेषु साधनेषु सन्निहितेषु कर्तुरेव प्रवर्तयितृत्वात्। यथाह—"कथं पुनर्ज्ञायते कर्ता प्रधानम्? इति यत्सर्वेषु साधनेषु कर्ता प्रवर्तयिता भवति" (म० भा० भाग २ पृ० २४५ नि० स०)।

एवञ्च पतञ्जलिव्याख्यानुसारं पाणिनिनये कारकचक्रप्रयोक्तृत्वं कर्तुः स्वातन्त्र्यमित्यायाति।

इदञ्च महाभाष्यकारमतं कर्तृविषये भर्तृहरिमतपोषणार्थं समुद्धृतं वाक्यपदीयटीकायाम् "प्रागन्यतः शक्तिलाभात्" इत्यादि कारिकाद्वयव्याख्याने हेलाराजेन । एतच्चाग्रे विवरीष्यते ।

## पतञ्जलिनये एकस्यैव कारकत्वमधिकरणत्वादि च

पतञ्जलिरेकस्यैव कारकत्वमधिकरणत्वादि च प्रकारद्वयेन साधयति—

( १ ) प्रधानव्यवायकालिकं स्वातन्त्र्यमादाय कारकत्वव्यवहारः, प्रधानसमवायकालिकं च पारतन्त्र्यमादायाधिकरणत्वादिव्यवहारः ।

( २ ) वाक्योपात्तसर्वकारकसाधारण्येका क्रिया । यथा—

"देवदत्तः काष्ठैः स्थाल्यामोदनं पचति"

इत्यत्र सर्वसाध्या पचिरूपा क्रिया, पचनस्य सर्वव्यापारजन्यत्वात् । ततश्च सर्वेषां तस्यां कर्तृत्वम्, अतश्च कारकत्वम् । अवान्तरव्यापारविवक्षायान्तु करणादिरूपत्वम् । यथा मातापित्रोरपत्योत्पादने कर्तृत्वम् । भेदविवक्षायान्तु 'अयमस्यां जनयति', 'इयमस्माज्जनयति' इत्यादौ मातुरधिकरणत्वं पितुश्चोपादानत्वं व्यवतिष्ठते । कर्तृसंज्ञा तु करणत्वाद्यवस्थायां न भवति ।

"स्वतन्त्रः कर्ता"

इत्यत्र हि कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वातन्त्र्यश्रुतिर्नियमार्था । तस्माद् यस्य स्वातन्त्र्यमेव तस्यैव कर्तृसंज्ञा, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य ।

कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमुद्भूतत्वेनाविवक्षितमपि स्वातन्त्र्यमाश्रित्य करणादीनां विधानसामर्थ्यात् प्रवर्तते । यत्र च शक्तीनां निमित्तनिमित्तिभावेन युगपद् विवक्षा, त्रत संज्ञानां विप्रतिषेधो भवति । यथा—

"धनुषा विध्यति"

इत्यत्र विनापायविवक्षया धनुषः साधकतमत्वाभावात् संज्ञाद्वयप्रसङ्गे परत्वात् करणसंज्ञैव ।

## शैवाद्वैतदर्शनम्

### स्वतन्त्रशब्दार्थः

"स्वतन्त्रः कर्ता" इति सूत्रं व्याचक्षाणेन पतञ्जलिना "तन्त्रशब्दः प्राधान्ये वर्तते" इत्युक्तम्। स्वशब्द आत्मवाची। एवञ्च स्वः आत्मा तन्त्रं प्रधानं यस्येति विग्रहानुसारं स्वप्रधानापरपर्यायः स्वतन्त्रशब्दः।

### कर्तृकारकशब्दयोरर्थभेदः

कारकशब्दार्थात् कर्तृशब्दार्थस्यायं भेदः। उक्तमेव प्राक् प्रत्येकं क्रिया क्रियासमूहरूपा। यथा पचतिक्रिया इन्धननिष्ठज्वलिति-स्थालीनिष्ठधृति-दर्वीनिष्ठघट्टिति-तण्डुलनिष्ठविक्लित्ति-देवदत्त-निष्ठप्रयुक्त्यादिक्रियासमूहरूपा। समूहरूपा क्रिया प्रतिकारकं न भिन्ना, परन्तु काष्ठादेः स्वव्यापारे ज्वलित्यादिरूपे स्वातन्त्र्यम्, अतश्च कारकत्वम्। परं पच्यादिसमूहं प्रति कर्तृदेवदत्तपारतन्त्र्यम्, अतश्च करणत्वम्। एवञ्च कर्तृभिन्नं सर्वमपि कारकं प्रधानसमवाये परतन्त्रं तदव्यवाये च स्वतन्त्रम्। अतः कर्तृसंज्ञा करणाद्यवस्थायां न भवति।

परन्तु "स्वतन्त्रः कर्ता" इति सूत्रे कारकत्वादेवोपर्युक्तप्रकारेण स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतिर्नियमार्था। अतो यस्य स्वतः स्वातन्त्र्यमेव, न तु पारतन्त्र्यसहितं स्वातन्त्र्यम्, तस्यैव कर्तृसंज्ञा।

### कर्तृप्राधान्यविवरणम्

कर्तुर्वाक्योपात्तसर्वकारकेषु प्राधान्यं स्वीक्रियते, सन्निहितेषु सर्वेष्वपि साधनेषु तस्य प्रवर्तयितृत्वात्, कारकान्तरं विनापि सर्वक्रियासु प्रधानानामसिवृत्त्यादिक्रियाणां कर्तृत्वाच्च। एवञ्च पतञ्जलि-कैयटकृतव्याख्यानुसारं पाणिनिरनवच्छिन्नस्वातन्त्र्यः कर्तेत्यभ्युपगच्छति स्म। अतः स्वातन्त्र्यवादी पाणिनिः। यतोऽद्वैतवादिभिः काश्मीरिकशैवैः स्वातन्त्र्यशक्तिः स्फुरत्ता-महासत्ताद्य-परपर्याया स्वीक्रियते। सत्ता च भवनकर्तृता भवने स्वातन्त्र्यमिति व्याख्यायते। तथा च शिव एव तथा तथा भवतीति स्वातन्त्र्यवादः स्थाप्यते। यथाह—

> चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता।
> स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः॥

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥ इति ।

( भा० भाग १ पृ० २५०-५५ )

## कैयटोपरि भर्तृहरिप्रभावः

इदन्तु सुप्रसिद्धं यद् भर्तृहरिः पातञ्जलमहाभाष्यस्य त्रिपदीत्याख्यां व्याख्यामलिखत्, यद्यपि तस्याः प्रारम्भिकः सप्तपञ्चाशत्सूत्रपर्यन्त एव भागोऽद्यावधि समुपलब्धः । जैयटात्मजः कैयटो भर्तृहरिकृतां महाभाष्यटीकां वाक्यपदीयं तद्वृत्तिञ्च परिशील्य महाभाष्यप्रदीपं लिखितवान् । यथाह—

तथापि हरिबद्धेन सारेण ग्रन्थसेतुना ।
क्रममाणः शनैः पारं तस्य प्राप्तास्मि पङ्गुवत् ॥ इति ।

प्रकृतस्य "स्वतन्त्रः कर्ता" इति सूत्रस्य व्याख्याया उपरि क्रियते चेद् दृष्टिपातस्तदा नावशिष्यते सन्देहकणिकापि कैयटोपरि भर्तृहरिप्रभावविषये । यतस्तत्र तत्र कैयटो भर्तृहरिपदसरणिमेवानुसरति । अवलोक्यतां साम्यं भर्तृहरिकारिकाद्वयस्य कैयटवाक्यैः सह । यथा भर्तृहरिराह—

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात् ॥
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात् ।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते ॥

( वा० प० का० ३ पृ० २४३ )

तथैवाह कैयटोऽपि—

"तदधीनप्रवृत्तिनिवृत्तित्वात् करणादीनाम्, तस्य च प्रागन्यतः शक्तिलाभात् प्रतिनिध्यदर्शनात् करणाद्यभावेऽपि 'आस्ते शेते' इत्यादौ केवलस्य कर्तुर्दर्शनात् कर्तृरहितानां करणानामदर्शनात् प्राधान्यं कर्तुः" ( म० भा० प्र० भा० २; नि० पृ० २४५ ) इति ।

एवञ्च कर्ता स्वतन्त्रः । स ह्यन्यतः शक्तिलाभात् प्रागेवाऽर्थितादिवशेन साधनाद्युपार्जने

प्रवर्तते । करणानि कुठारादीनि तु तदैव क्रियासु प्रवर्तन्ते यदा तेषु कर्ता शक्तिमादधाति, तथा च तानि स्वाधीनीकरोति । अतः कर्त्रायत्तव्यापारत्वात् करणादीन्यस्वतन्त्राणि ।

देवदत्तः काष्ठैः स्थाल्यामोदनं पचन् काष्ठान्यधिकं प्रज्वलन्ति पश्यन् तानि निवर्तयति । स च काष्ठैः पत्रैस्तृणैर्विद्युता वा पचतीति करणादीनां वर्तते प्रतिनिधिः । न तु वर्तत एवंभूतः प्रतिनिधिः कर्तुः । यद्यपि साधारणासु पच्यादिक्रियास्वपेक्षते कर्ता साधनानि, तथापि भवनवर्तनादिक्रियासु साधननिरपेक्ष एव । अतो भवनक्रियायां वर्तनक्रियायाञ्च सर्वथा स्वतन्त्रः कर्तेति पाणिनि-पतञ्जलि-भर्तृहरीणां सामान्योऽभ्युपगमः । स्पष्टीकृतं चैतत् तत्रभवता हेलाराजेनोपर्युक्तकारिकाव्याख्यायाम्—

"यत्सर्वेषु साधनेषु कर्ता प्रवर्तयिता भवति"

(म० भा० भाग २ नि०; पृ० २४५)

इति महाभाष्यवाक्यमुद्धृत्य,

"एतच्च भाष्यं गर्भीकृतनान्तरीयकार्थसहं संक्षिप्योक्तम्"

इति वदता । उपर्युक्तकारकादिविवरणैरिदं सुस्पष्टं यत् 'कर्तृकारकम्' इति कथयन्तो वैयाकरणा न व्यर्थपुनरुक्तिदोषभाजः, कर्तुः पारतन्त्र्यरहितस्वातन्त्र्याभ्युपगमात्, कारकान्तराणाञ्च पारतन्त्र्यमिश्रितस्वातन्त्र्यस्वीकरणात् ।

कर्ता च शक्तिमान् स्वतन्त्रः । शक्तिशक्तिमतोश्चैक्यम् । सांसारिकस्य कर्तुरापेक्षिकमवच्छिन्नञ्च स्वातन्त्र्यम्, परिमितत्वात् । अपरिच्छिन्नस्य शिवादिशब्दनिर्दिष्टस्य तु कर्तुरवच्छेदशून्यं स्वातन्त्र्यं यत्कालशक्तीति नाम्नोपात्तं भर्तृहरिणा स्वीये वाक्यपदीये, यथा प्रतिपादितं मयैवैतद्विश्वविद्यालयीयैषमस्त्यदर्शनपरिषदधिवेशने "स्वातन्त्र्यवादी भर्तृहरिः" इतिशीर्षकं स्वलेखं पठता । अतः पिष्टपेषणं परिहरता मया नोपपाद्यते भर्तृहरेः स्वातन्त्र्यवादित्वम्, विदुषस्तत एवावगमिष्यन्तीति मन्यमानेन ।

अतो भगवता शिवेन चतुर्दशसूत्रैरुपदिष्टः, नन्दिकेश्वरेण तद्व्याख्यारूपायां स्वकाशिकायां विवृतः, पाणिनिना स्वाष्टाध्याय्यां स्वप्रयोजनानुसारं 'स्वतन्त्रः कर्ता' इति सूत्रे परिगृहीतः, पतञ्जलिना स्वभाष्ये ससंक्षेपं प्रतिपादितः, भर्तृहरिणा स्वीये वाक्यपदीये विशदीकृतः, तट्टीकाकारेणाभिनवगुप्तगुरुणा हेलाराजेन सविस्तरं व्याख्यातः स्वातन्त्र्यवादः सोमानन्दादिभिः काश्मीरिकाद्वैतशैवैः स्वतन्त्रसिद्धान्ततया प्रतिष्ठापित इति मामकीनं मतम् ।

एवञ्च भर्तृहरेर्वाक्यपदीयं न वेदान्तप्रक्रियानुसारं व्याख्यां सहते, तस्य स्वातन्त्र्यवादित्वात् । विवर्तशब्दस्य भर्तृहरिव्याख्यात्रनुसारं न वेदान्तिस्वीकृतो रूढोऽर्थः, अपि तु यौगिक एव 'विशेषेण विलक्षणतया वा वर्तनम्' इत्यादि यथापूर्वोक्तभर्तृहरिस्वातन्त्र्यवादविषयकपत्रे स्पष्टीकृतम् ।

यत्तु भर्तृहरेः स्वीयायां वाक्यपदीयटीकायाम्—

"एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिता विवर्तः, स्वप्नविषयप्रतिभासवत् ।"

इति विवर्तलक्षणम् । तत्र 'असत्य'पदोपादानादेव स्वातन्त्र्यवादिस्वीकृतं मिथ्याज्ञानस्वरूपमजानानां वेदान्तिनां यो 'भर्तृहरिर्वेदान्तानुयायी' इति भ्रमः, स स्वातन्त्र्यवादिनां नयेऽसत्यस्य भ्रमस्य च स्वरूपे निरूप्य नातिदूरे दूरीकरिष्यते ।

## प्रत्यभिज्ञादर्शनेतिहासः साहित्यञ्च

सर्वाण्यप्यद्वैतशैवदर्शनानि चतुःषष्ट्यागमाश्रितानि । धार्मिकशैवदृष्ट्या शैवागमाः शिवात् परम्परायाता एवं चानाद्या ईश्वरोक्तवेदवत् । तथापि कालेन सा परम्परा विच्छिद्यतेऽनुग्रहकारिणा शिवेन भूयः प्रचाल्यते च । अतो भाषामूलमागमानां वेदेभ्योऽर्वाक्त्वप्रतिपादनं निर्मूलम् । शैवागमाध्येतृपरम्परायां सत्ययुगादारभ्य कलियुगप्रारम्भिकांशपर्यन्तं स्वच्छन्द-लाकुल–अणुराज्-अब्जज–बलि–वामन–विभीषण–रावण–राम–लक्ष्मण–सिद्ध–ऋषि–योगिप्रभृतयो निर्दिष्टाः । कलिप्रभावे विस्तृते शैवागमविद ऋषयो दुर्गमस्थानं गताः । एवञ्च शिवशासनपरम्परा व्युच्छिन्ना । इयं शैवागमाध्येतृपरम्परा अभिनवगुप्तपादैः स्वीयतन्त्रालोके षट्त्रिंशाह्निके सिद्धागमाश्रयेण वर्णिता ।

सोमानन्दोऽभिनवगुप्तपादस्य परमेष्ठिगुरुरासीत् । अभिनवगुप्तश्च—

इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे
तिथिशशिजलधिस्थे मार्गशीर्षावसाने ।
जगति विहितबोधामीश्वरप्रत्यभिज्ञां
व्यवृणुत परिपूर्णां प्रेरितः शम्भुपादैः ॥

इति स्वकथनानुसारं पञ्चदशाधिकदशशततमे ईशवीयवर्षे ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनीं समापितवान् । एवं चेशवीयदशमशतकमध्यजन्मनामभिनवगुप्तपादानां परमेष्ठिगुरुः सोमानन्द ईश-

वीयनवमशताब्द्यां समभूदिति निश्चीयते। अयं सोमानन्दः कलावद्वैतचतुःषष्टिशैवागमपरम्पराप्रथम-प्रचालकात् त्र्यम्बकादेकोनविंश इत्यैतिहासिकदृष्ट्याऽद्वैतशैवागमप्रचार ईशवीयचतुर्थशतकान्त्य-भागे समभूदिति सिध्यति स्थूलदृष्ट्या, तथापि शैवागमप्रचार ईशवीयशतकप्रारम्भात् पूर्वमासी-दिति युक्तिभिः संस्थापितमेव प्रथमव्याख्याने। इमांश्चतुःषष्ट्यागमान् शङ्कराचार्यो जानातिस्मानु-सरतिस्म चेति—

"चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनम्"

इति तदीयसौन्दर्यलहरीश्लोकादवगम्यते। सोमानन्दोऽस्याः शैवागमिकविचारधाराया आणव-शाक्त-शाम्भव-प्रत्यभिज्ञाख्येषु चतुर्षूपायेषूर्ध्वतममन्तिममनुपायापरपर्यायं प्रत्यभिज्ञेतिविश्रुतं स्वसमकालमान्यद्वैतशैवप्रतिपादकवसुगुप्ताचार्याऽविदितं मोक्षोपायं प्रत्यभिज्ञेयमहेश्वरस्वरूपं च युक्तिभिः संसाध्य शिवदृष्ट्या प्रकटीचकार ईशवीयनवमशतके। अत एव शिवदृष्टौ प्रतिपादितं दर्शनं प्रत्यभिज्ञादर्शनमित्युच्यते।

शिवदृष्टिप्रतिबिम्बभूतामीश्वरप्रत्यभिज्ञाकारिकां तस्याश्चोपरि वृत्तिनाम्नीं टीकां तस्या अप्युपरि विवृत्याख्यां टीकां सोमानन्दशिष्य उत्पलाचार्यो व्यलिखत्। अभिनवगुप्ताचार्यश्चोत्पला-चार्यकृत्योरीश्वरप्रत्यभिज्ञाकारिकातद्विवृत्योरुपरि क्रमशो विमर्शिनी-विवृतिविमर्शिनीति प्रसिद्धे द्वे टीके कृतवान्। इदमेव ग्रन्थपञ्चकं शिवदृष्ट्याख्यप्रकरणसहितं मुख्यतया प्रत्यभिज्ञा-दर्शनोपपादकमिति सर्वदर्शनसंग्रहे मधुराजयोगिकृतशास्त्रपरामर्शश्लोकमुद्धरता माधवेन स्वीकृतम्। यथाह—

सूत्रं वृत्तिर्विवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ।
प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभिज्ञायाः॥ इति।

अभिनवगुप्तानन्तरं न कश्चन मौलिको ग्रन्थः प्रत्यभिज्ञाप्रतिपादकः समुपलभ्यते। अभिनव-गुप्तकृतस्तन्त्रालोकस्तु त्रयाणामप्यद्वैतशैवदर्शनानां क्रम-कुल-प्रत्यभिज्ञेतिविख्यातानां प्रतिपा-दनपरः।

तच्छिष्य-प्रशिष्यादिभिर्विरचिताः प्रत्यभिज्ञाविषयका ग्रन्था इमे—

तच्छिष्यक्षेमराजकृतः प्रत्यभिज्ञाहृदयेतिप्रसिद्धः प्रत्यभिज्ञादर्शनस्य संक्षिप्तो ग्रन्थः, योग-राजकृता ( १०६० ई० ) परमार्थसारटीका, जयरथलिखिता ( ११८० ई० ) तन्त्रालोकटीका, भास्करकण्ठकृता ( १७८० ई० ) ईश्वरप्रत्यभिज्ञाटीका भास्करीतिप्रसिद्धा, अन्या चाज्ञातनाम्ना केनापि कृता, यस्या मुद्रापणमस्माभिर्भास्कर्या द्वितीये संस्करणे चिकीर्ष्यते।

इदमत्रावधेयम्—

महादेवगिरौ शिलोत्कीर्णानि सोमानन्दपूर्वभाविना वसुगुप्तेन ( ८२५ई० ) लब्धानि प्रकाशितानि च शिवसूत्राणि न प्रत्यभिज्ञादर्शनप्रतिपादकानि। तेषु प्रत्यभिज्ञाख्योपायस्य नाममात्रेणाप्यनुपलम्भात्, शाम्भव-शाक्त-आणवाख्यानां त्रयाणामेव मार्गाणामेकैकेनाध्यायेना-ध्यायत्रयविभक्ते शिवसूत्रे व्याख्यानाच्च। एतदूरीकृत्यैवेश्वरप्रत्यभिज्ञाकारिकायाम्—

इति प्रकटितो मया सुघट एष मार्गो नवो
गुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा॥

इतीयमुत्पलाचार्योक्तिः संगमयितुं शक्यते नान्यथा। अभिनवत्वं च प्रत्यभिज्ञामार्गस्य वसुगुप्तेनाऽप्रतिपादनात्; न तु शैवागमानाश्रितत्वात्, यतः सोमानन्दः स्वयमेव वक्ति शिवदृष्ट्यन्ते—

प्रतिपादितमेतावत् सर्वमेव शिवात्मकम्।
न स्वबुद्ध्या शिवो दाता शिवो भोक्तेति शास्त्रतः॥ इति।

एवं स्पन्दकारिका तदाश्रिताश्च ग्रन्था न प्रत्यभिज्ञादर्शनप्रतिपादनपराः, यतः स्पन्द-कारिका शिवसूत्रसंग्रहपरा, यथा स्पष्टीभवति शिवसूत्रविमर्शिनीकर्तुः क्षेमराजस्य वचनात्। यथाह—

"एतानि च सम्यगधिगत्य भट्टश्रीकल्लटाद्येषु प्रकाशितवान् स्पन्दकारिकाभिश्च संगृहीतवान्" ( शि० सू० वि० ३ ) इति।

स्पन्दशास्त्रं च प्रत्यभिज्ञाशास्त्राद् भिन्नम्, पूर्वस्य प्राधान्येन शाक्तोपायप्रतिपादकत्वा-दित्यपि ध्वन्यते क्षेमराजवाक्यात्। यथाह—

"श्रीपूर्वशास्त्रे ध्यानाद्येवाणवत्वेनोक्तम्। एतच्च स्थूलत्वात् शाक्तोपायप्रकाशनात्मनि स्पन्दशास्त्रे न संगृहीतम्" ( शि० सू० वि० ७९ ) इति।

इदमप्यवश्यं स्मरणीयम्। शिवसूत्रप्रदर्शितास्त्रयो मार्गा आगमाश्रिताः, शिवसूत्रस्यापि रहस्यागमसारसंग्रहरूपत्वात्। यथाह स एव—

"रहस्यागमसारसंग्रहरूपत्वात् शिवसूत्राणाम्" ( शि० सू० वि० ५५ ) इति।

# शैवाद्वैतदर्शनम्

## प्रत्यभिज्ञादर्शनप्रास्ताविकम्

काश्मीरः शारदापीठ इति सुप्रसिद्धम्। प्रत्यभिज्ञादर्शनोत्थानसमये काश्मीरो बहूनां दार्शनिकविचारधाराणां संगमस्थानमासीत्। अशोकसमयादारभ्य (२७३-२३२ ई० पू०) काश्मीरो बौद्धानां महत्केन्द्रमभूत्। इह कनिष्को बौद्धधर्मपुस्तकेषु परस्परविरुद्धांशान् संगमयितुं बौद्धपण्डितानामेकां महतीं सभामायोजितवान्। बौद्धमतसत्ता कनिष्कसमये (७८—१०१ ई०) काश्मीरिकशैवानामरुन्तुदा सञ्जाता, यदा कनिष्कः सम्पूर्णां काश्मीरभूमिं बौद्धभिक्षुसंघाय प्रादात् तन्नेता नागार्जुनश्चार्थिकवैभवसहकृतं स्वीयं विचित्रबुद्धिवैभवं बौद्धधर्मप्रचाराय शैवधर्मोन्मूलनाय च प्रायौक्षीत्। नागार्जुनस्य तदनुयायिनां च शैवधर्मद्वेष्टृत्वं कल्हणकृतायां राजतरङ्गिण्यां वरदराजकृतशिवसूत्रवार्त्तिके चेत्थं सूचितम्—

> नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः।
> क्रियां नीलपुराणोक्तामाच्छिन्दन्नागमद्विषः॥ (रा० त०) इति।
> नागबोध्यादिभिः सिद्धैर्नास्तिकानां पुरःसरैः।
> आक्रान्ते जीवलोकेऽस्मिन्नात्मेश्वरनिरासकैः॥ (शि० सू० वा०) इति।

पाणिनीयव्याकरणस्य दर्शनस्य चाध्ययनाध्यापनपरम्परां कल्हणानुसारं काश्मीरराजोऽभिमन्युः संभवत ईशवीयपूर्वचतुर्थशतकभवः समचालयत्। पुण्यराजो वाक्यपदीयद्वितीयाध्यायटीकान्ते राजानकशूरवर्मशशाङ्कनामानौ स्वगुरुपरमगुरू कीर्तयति स्म। हेलाराजो भूतिराजतनयोऽपरो वाक्यपदीयटीकाकृद् भूतिराजश्चाभिनवगुप्तपादानां गुरू आस्ताम्। अभिनवगुप्तपादं वैयाकरणसिद्धान्तसंवेतृतया नवं शेषं स्वीकुर्वन्तस्तद्गुरवोऽभिनवगुप्तपाद इति नाम तस्मै प्रादुः।

न्यायदर्शनस्य तथाऽद्वैतवेदान्तदर्शनस्य काश्मीरे समीचीनः प्रचार आसीत्, न्यायसिद्धान्तमवलम्ब्य श्रीशङ्कुककृतस्य, वेदान्तसिद्धान्तानुसारं भट्टनायककृतस्य च रससूत्रव्याख्यानस्योपलम्भात्। अभिनवगुप्तः स्वीयकथामुखतिलके न्यायाभ्युपगतषोडशपदार्थान् प्रतिपादयति स्म, मालिनीविजयवार्त्तिके च वैशेषिकाभ्युपगतसमवायविशेषाभावान् दृढं समालोचयति स्म, ध्वन्यालोकलोचने चाभिहितान्वयवादान्विताभिधानवादमीमांसकसिद्धान्तौ च। प्रथमव्याख्याने संकीर्तिता रामकण्ठादयो द्वैतशैवसिद्धान्तदर्शनं व्याचख्युः। नैषधचरितकर्ता श्रीहर्षो जयन्तचन्द्राज्ञानुसारं स्वनिबन्धं काश्मीरविदुषः प्रदर्शयितुं शारदाहस्ते च स्वीकृत्यर्थं समर्पयितुं काश्मीरं जगाम। अत ईशवीयपूर्वचतुर्थशतकादारभ्य द्वादशशतकपर्यन्तं काश्मीरस्य शारदापीठत्वं विविधदर्शनविचार-

धारासंगमभूमित्वं चाक्षतमासीत् । शङ्कराचार्योऽपि मण्डनमिश्रप्रारब्धोन्मूलनं बौद्धमतं भारतीय-प्रदेशान्तरेभ्यः समुन्मूल्य ईशवीयनवमशतकस्य द्वितीयदशके काश्मीरमगमत् संवर्धयितुं तत्रत्यदार्शनिकेष्वद्वैतवेदान्ताद्वैतशैवागमज्ञानम्, प्रचारयितुं शैवाद्वैतविचारधारां दक्षिणामूर्तिस्तोत्रादिद्वारा, प्रोत्साहयितुं काश्मीरविदुषोऽद्वैतशैवविषये बौद्धकृतानाक्षेपानपाकर्तुम् । सुरेश्वराचार्यश्च तच्छिष्यो व्याख्याद् दक्षिणामूर्तिस्तोत्रमद्वैतशैवागमानुसारं प्रयुञ्जन् शैवागमपारिभाषिकशब्दान्, आकर्षयन् तत्रत्यशैवानां ध्यानं मौलिकशैवाद्वैतसिद्धान्तान् प्रति, दर्शयंश्चागमाश्रितशाङ्कराद्वैतस्य शैवाद्वैतसाम्यम्, प्रवर्धयंश्च शैवविदुषामुत्साहं दार्शनिकदृष्ट्या शैवागमानध्येतुम् ।

शङ्करः शैव आसीदित्यत्र नास्ति विवादः । स च चतुःषष्ट्यागमाननुसरति स्म, श्रीचक्रं शैवागमानुसारं जगन्नाथपुरीस्थस्वमठे स्थापयति स्मेत्यपि सुप्रसिद्धम्, तच्चक्रमद्यापि तत्र तिष्ठत्येव, केनापि तत्र गत्वा शक्यतेऽवलोकयितुम् । अतस्तदीयः सिद्धान्तोऽद्वैतशैवागमानुसारमध्ययनमपेक्षते । अद्यत्वे त्वागमान् सर्वथोपेक्ष्य वेदान्तसूत्रोपरि तत्कृतभाष्यमात्रं तदुपरि च न्यायसिद्धान्तप्रभावितैः परभाविभिः कृतानन्यान् ग्रन्थांश्चाश्रित्याऽद्वैतवेदान्तसिद्धान्तः प्रचलति । परन्तु शैवेन शङ्करेणाद्वैतशैवागमविरुद्धं कथमुक्तमिति न चिन्त्यते ।

सोमानन्दाभिनवगुप्तादयस्तु विविधान्यद्वैतवेदान्तमतानि समालोचयन्तः, तत्र तत्र जडब्रह्मवाद-अभावब्रह्मवाद-शून्यब्रह्मवादादिशब्दान् प्रयुञ्जन्तोऽपि न क्वचन शङ्करनाम गृह्णन्ति । तत्रेदं कारणं प्रतिभाति—

अभिनवगुप्तः स्वीयेश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यन्तेऽद्वैतशैवादद्वैतवेदान्तस्य मौलिकं भेदं मायास्वरूपमात्र एव मनुते । पूर्वो मायां शक्तिं स्वीकरोति, अपरस्तु सदसद्भ्यामनिर्वचनीयाम् । शङ्करस्तु तत्र तत्र स्वभाष्ये मायाविषये शक्तिशब्दं प्रयुनक्ति । यथा—

"शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः·······अविद्यात्मिका बीजशक्तिः" (शां० भा० २९७), "सर्वज्ञस्येश्वरस्य मायाशक्तिः" ( शां० भा० ३८२ ) इत्यादि ।

गहनोऽयं विषयः समधिकं विचारमपेक्षत इति नेह प्रतन्यते ।

## प्रत्यभिज्ञादर्शनम्

प्रत्यभिज्ञादर्शनं स्वातन्त्र्यवादः, आभासवादः, संविदद्वयवादः, यथार्थप्रत्ययवादः, काश्मीरशैवाद्वैतमित्यादिनामभिस्तत्र तत्र समुल्लिखितम् ।

## शैवाद्वैतदर्शनम्

### स्वातन्त्र्यवादः

कस्मिंश्चिदन्यस्मिन् वादे स्वीकृते न केवलमात्यन्तिको मोक्षो न संभवत्यपि तु साधारणो लौकिको व्यवहारोऽपि। यतो विवर्तोऽसत्यरूपप्रतिभासात्मेत्युच्यते। निर्भासते चासत्यञ्चेति कथमिति तु न चिन्तितम्। परिणामे तु रूपान्तरं तिरोभवति रूपान्तरञ्चाविर्भवतीत्युक्तम्। प्रकाशस्य रूपान्तराभावात् तत्तिरोधाने स्यादान्ध्यम्। अप्रकाशश्च प्रादुर्भवन् नैव प्रकाशेतेत्युभयथापि सुप्तं जगत् स्यादिति न विचारितम्। वेदान्त्यभ्युपगतप्रतिबिम्बवादे स्वच्छतामात्रं संवेदनस्य न स्वातन्त्र्यमिति प्रतिबिम्बसमर्पकवस्त्वन्तरपर्येषणा कर्तव्या। अविद्या चानिर्वचनीया वैचित्र्यं चाधत्ते इति व्याहतम्। वेदान्तिस्वीकृतः प्रतिबिम्बवादो वेदान्तपरिभाषादिग्रन्थेषूपलभ्यमानो यथा न युक्तियुक्तस्तथा तन्मतोपन्यासपूर्वकमभिनवगुप्तपादैः स्वीयतन्त्रालोके तृतीयाह्निकेऽखण्ड्ययुक्तिभिः प्रदर्शितम्। यथाह—

> यस्त्वाह नेत्रतेजांसि स्वच्छात् प्रतिफलन्त्यलम्।
> विपर्यस्य स्वकं रूपं गृह्णन्तीति स पृच्छयते ॥
>
> (तं० आ० ३, श्लो० १२)
>
> विपर्यस्तैस्तु तेजोभिर्ग्राहकात्मत्वमागतैः।
> रूपं दृश्येत वदने निजे न मुकुरान्तरे ॥
>
> (तं० आ० ३, श्लो० १४)

इत्यादिकारिकाभिः। प्रतिफलनबलात् प्रत्यावृत्ता यदि नायना रश्मयः स्वकमेव वक्त्रं गृह्णन्ति, तर्हि निज एव देशे वक्त्रग्रहणं न्याय्यम्, नान्यत्र दर्पणादेरन्त इति भावः।

तस्मादनपह्नवनीयः प्रकाशविमर्शात्मा संवित्स्वभावः परमशिवः, स्वातन्त्र्यादेव मन्त्र-मन्त्रेश-मन्त्रमहेश-अकल-सकलादीन् विविधप्रमातृरूपतया, नीलसुखादीनगण्यान् प्रमेयतया स्वरूपानतिरिक्तेनापि सांसारिकविवेचकदृष्ट्याऽतिरिक्ततयेव भासमानेन, स्वरूपानाच्छादकेन, संविद्रूपनान्तरीयकस्वातन्त्र्यमहिम्ना प्रकाशयन् प्रकाशत इति स्वातन्त्र्यवादः स्थापितः।

स्वतन्त्रः परमशिवो महेश्वर एव स्वात्मनः सकाशात् स्वात्मन्येव स्वयैवेच्छया परदशायां स्वाभेदेनाऽहन्तारूपतया स्वस्मिन् वर्तमानं पदार्थजातम्, अपरदशायामन्योन्यावहानेन भेदात्मना निर्भासयन्, भेदेनावभासितानां पदार्थानां कार्यकारणभाव-क्रियाकारकभावादीन् पारस्परिकसम्बन्धांश्चावभासयन् सर्वेषां पारमार्थिकः स्वभाव इति स्वातन्त्र्यवाद्यद्वैतशैवानां सिद्धान्तः।

तत्र विवदिषूणामिमे प्रश्नाः—

( १ ) समस्तमिदं भावजातं चिद्रूपे भगवति शिवे विश्रान्तमित्येव कथं प्रत्येयम् ?

( २ ) तदीययैवेच्छया आत्मसंस्थं चेद् भावजातं बहिरवभास्यते, तर्हि स्वात्मन्येवावभास्यत इति कथं संगच्छते ? स्वात्मन्यविभेदेन यद् भासनं तद्विरुद्धं हि बहिरवभासनम्। नहि यद् भासमानं तत्रैव भवति तत्तदन्तर्वर्तित्वदशायामेव तद्बहिर्भूतमिति युक्तं वक्तुम्, घट इव गृहान्तर्भूतस्तद्बहिर्भूतश्चेति ?

( ३ ) बहिर्भूतानामपि पदार्थानां स एव शिव आत्मेति नितरामप्रातीतिकम्, यतो बहिर्भासनं भेदावभासेन व्याप्तम्, शिवात्मत्वं चैषामेकात्मत्वेन तद्विरुद्धेन व्याप्तम्। ततश्च नानात्मानश्चैकात्मानश्चेमे भावा इत्युक्तं कः प्रतीयात् ?

( ४ ) स्वात्मसंस्थं वेद्यवेदकराशिं बहिरवभासयितुं किमर्थमस्येच्छोत्पद्यते ? निष्कारणमेव वा सोत्पद्यते ? द्वितीयविकल्पाभ्युपगमे सततमेव शिवः सेच्छः स्यान्न कदाचिद्वेति स्वातन्त्र्यवादः सर्वथाऽसमञ्जस इति पूर्वपक्षिमतम्।

पूर्वपक्षिप्रश्नसमाधानम्—

(१) शिवात्मन्येव विश्वं विश्रान्तमित्येवं साध्यते। भावानां सत्त्वमसत्त्वं वा निश्चीयमानं संविद्विश्रान्तिमन्तरेण न शक्यते निश्चेतुम्। अतः संविद्विश्रान्ता एव पदार्थाः प्रकाशमाना भवन्तीति सिद्ध्यति। प्रकाशमानता चैषां संविदभेद एव, यतः प्रकाश एव संवित्। एवञ्च प्रकाशादतिरिच्यन्ते च प्रकाशन्ते चेत्युक्ते नीलं स्वरूपाद् व्यतिरिक्तम्, अथ च नीलमित्युक्तिरिव स्यात्। अतः सिद्ध्यतीदं यत् संविद्विश्रान्ता भावाः संविदनधिकवृत्तयः।

( २ ) तदीययैवेच्छया आत्मसंस्थं चेद् भावजातं बहिरवभास्यते तर्हि स्वात्मन्यवभास्यत इति किम् ? अयं प्रश्न एवं समाधीयते—नहि प्रसेवकादिवाक्षोटादि चिदात्मसंस्थं भावजातं चिदात्मनो निर्गतं बहिर्भासते, अपि तु स एव भगवान् स्वस्वातन्त्र्यादनतिरिक्तामप्यतिरिक्तामिव जगद्रूपतां दर्पणनगरवत् प्रकाशयन् स्थितः। भाववर्गो बाह्यतयाऽवभासमानोऽपि संविन्मये प्रकाश एव विश्राम्यति, अन्यथा प्रकाशेदेव न। अतः सुष्ठूक्तं प्रकाशविमर्शरूपाच्छिवान्निर्गतमपि भावजातं तद्विश्रान्तमेव तस्मिन्नेव भाति। अन्यथा तन्नैव भासेत, प्रकाशविश्रान्तस्यैव भानमिति सिद्धान्तात्।

( ३ ) तृतीयप्रश्नस्योत्तरमिदम्—

स्वातन्त्र्यवादानुसारं प्रकाशविमर्शरूपः शिवो विमर्शरूपयेच्छयैव नीलपीतादिमेयजातं रुद्रक्षेत्रज्ञादि च प्रमातृवर्गमवभासयति। तथा बाह्यतयाऽवभासमानमपि मातृमेयजातं प्रकाशमात्रतां नोज्झति, प्रकाशादतिरिक्तस्य तृणमात्रस्याप्यप्रकाशनप्रसङ्गात्।

तदेवंभूतं निर्भासमानं कथमपह्नूयतामिति विरोधोऽपि नात्र कश्चित्। यदि हि नील-मनुज्झितनीलप्रकाशभावमेवानीलप्रकाशतया निर्भायात् को नीलानीलयोर्विरोधवैधुर्यमुद्घोषयेत्। न चेदमप्रातीतिकम्। स्वप्ने योगिसृष्टौ च प्रमात्रैकात्मान एव भावाः प्रमातृबाह्यतया वैचित्र्येणा-वभासन्ते, अथ च प्रमातृविश्रान्ता एव भान्ति। तदिदमेव भगवतः स्वाच्छन्द्यं यत्संविदात्मक-विचित्रप्रमातृप्रमेयात्मना संविद्रूपानधिकेनापि संविद्रूपाधिकतया निर्भासमानवपुषा प्रकाशते, तथा विमृशति च।

(४) निष्कारणमेव स्वात्मसंस्थभावजातबहिश्चिकीर्षोद्गमस्वीकारे सदैव शिवः सेच्छः स्यान्न कदाचिदित्याक्षेपप्रतिक्षेप एवम्—

नास्मिन् सिद्धान्ते कालः कश्चन नित्यद्रव्यरूपस्तन्निर्माणानपेक्षः स्वतन्त्रः, यदवलम्बने-नायमाक्षेपः शक्यः कर्तुम्। कालो ह्यस्मिन् सिद्धान्ते त्रिविधः—शक्तिरूपः, परिमितप्रमातृ-कञ्चुकरूपः, सूर्यादिपरिस्पन्दरूपश्च। अन्त्यश्चास्मिन् सिद्धान्ते क्रियावैचित्र्याभासरूप एव। यथाह—

मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ।
क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः॥ इति।

सर्वश्च क्रमश्चित्राभासकृतः प्रभोः कालाख्यया शक्त्या आभास्यते। यथाह—

क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्त्वतः।
आभाससदसत्त्वे च चित्राभासकृतः प्रभोः॥ इति।

एवञ्च कालशक्त्यवभास्यः कला–नियति–राग–विद्या-कालाख्यपरिमितप्रमातृकञ्चुकमध्य-पतितकालाख्यपारिमित्यकारणग्राह्यत्वात् परिमितप्रमातृलग्नतयैव भवन् तद्विषयीकरणीयभावनिष्ठः क्रम एव कालः। तथा च सूर्यादिनिष्ठो नियतो यः क्रियावैचित्र्यरूपो क्रमः, स एव कालः। सुप्रसिद्धमिदं यन्नियतपरिमाणेन परिवर्तकादिना हेम मीयते। तथैव प्रसिद्धपरिमाणया अर्कोदया-ऽस्तमय्या क्रियया चैत्रगमनम्। यथोच्यते 'दिवसं चैत्रो गच्छति' इति।

योऽपि वैशेषिकाणां द्रव्यरूपः, कापिलानां रजःस्वभावः प्रवर्तनात्मकत्वात्, वैयाकरणानां नित्यानाश्रितप्रवृत्तिस्वभावः, सौगतानां सन्तन्यमानभावैकपरमार्थः, सोऽपि वस्तुतः क्रमरूपतां

नातिक्रामतीति क्रम एव नाम बहिः काल इति व्यवह्रियते। यत्रापि कारणे कालाख्येत्युच्यते तत्रापि दिवसे जातो मध्याह्ने जात इत्यर्कसञ्चारक्रमस्यैव कारणताप्रतीतिः सिद्धा, न तु नित्यद्रव्यात्मनः परिनिष्ठितरूपस्य कस्यचित्। द्रव्यमपि तत् प्रवहणधर्मकमेव नवपुराणतारूपपरत्वापरत्व-तद्वैचित्र्योत्थापकमिति चेत्, तर्हि पुनरपि क्रमरूपतैवास्य व्यवतिष्ठते, न रूपान्तरतेति क्रम एव कालः। अतो वेद्य एव कालावस्थितिर्न संविदि। ज्ञानेऽपि वेद्यांश एव कालो न स्वसंवेदनांशे, न च विमर्शरूपशब्दनांशे। तदुक्तम्—

सक्रमत्वं च लौकिक्याः क्रियायाः कालशक्तितः।
घटते न तु शाश्वत्याः प्राभव्याः स्यात् प्रभोरिव॥ इति।

एवं कालो देशो वा वेद्यराशिपतितो वेद्यत्वादेव संवित्तादात्म्यमभिधावन् न संविदं भेदयितुं शक्तः। अतः सर्वदा सेच्छः स्यात् कदाचिदपि वा नेति न शक्यते वक्तुम्। स्वातन्त्र्येणैव कारणानपेक्षत्वस्य व्यज्यमानत्वादनुत्थानोपहतश्चायं प्रश्नः।

## आभासवादः

आभासशब्दोऽद्वैतवेदान्तसाहित्येऽपि बहुशः प्रयुज्यते, परन्त्वेष शब्दः काश्मीराद्वैतशैव-साहित्ये वेदान्तस्वीकृतार्थाद्भिन्नेऽर्थे प्रयुज्यते। वेदान्तिनये आभासः सदसद्भ्यामनिर्वचनीयया मायया कल्पितो जडया मायया कल्पितत्वाज्जडस्तत्त्वान्यत्वाभ्यामनिर्वचनीयश्च। नहीश्वरत्वेन स निर्वक्तुं शक्यते, जडाजडयोरभेदायोगात्। नापि तदन्यत्वेन शक्यनिर्वचनः, स्वातन्त्र्येण तस्य सत्तास्फूर्त्य-सम्भवात्। नहि जडमजडानपेक्षं सत्तास्फूर्तिमदभ्युपगन्तुं शक्यते, जडत्वभङ्गप्रसङ्गात्।

मिथ्याज्ञानार्थेऽप्याभासशब्दः प्रयुज्यमान उपलभ्यते, यतः शुक्तौ रजतभ्रमे 'अविद्या' रजत-रूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमत इति वेदान्त्यभ्युपगमः। तथा च प्रतिबिम्बार्थेऽप्ययं शब्दः प्रयुज्यते। यथा—

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्॥ इति।

एवञ्च वेदान्तिनये प्रतिबिम्बादिवदवास्तवरूपमविद्याकार्यं मृषाबुद्धिश्चाभासः। अयं शब्दो वैभाषिक-वैशेषिक-पारमर्ष-सौत्रान्तिक-योगाचारविज्ञाननयेषु साधारणो यथायोगं तदौन्मुख्य-तत्प्रकाश-तत्प्रतिबिम्ब-तदुल्लेखेषु प्रयुक्तः।

## शैवाद्वैतदर्शनम्

परन्त्वद्वैतशैवनये सङ्कोचरूपेषदर्थकादाङुपसर्गपूर्वकात् प्रकाशापरपर्याय-दीप्त्यर्थाद् भास्-धातोर्घञन्तान्निष्पन्न आभासशब्दः परिच्छिन्नप्रकाशरूपे यौगिक एवार्थे प्रयुज्यते आभासवादविचारे। एतदर्थं केषुचित् स्थलेषु 'अवभास'शब्दोऽप्यवरतया निकर्षेणापूर्णतया भासमाने नीलादिविषये प्रयुज्यते। एवञ्च यत्किञ्चिदपि बाह्येन्द्रियग्राह्यमन्तःकरणग्राह्यं वा, यच्चान्तःकरणबहिष्करणव्यापार-विरतौ सुषुप्तमूर्च्छादौ भाति, यच्च परिच्छिन्नप्रमात्रा न शक्यते ग्रहीतुमतश्च समाधिमात्रगम्यम्, यत्किञ्चिदप्यस्ति, यस्य केनापि प्रकारेण सत्ताऽनुभूयते, यद्विषये च कथमपि शब्दव्यापारः सम्भवति, तद्विषयरूपं विषयिरूपं ज्ञानकरणरूपं ज्ञानरूपं वा सर्वमाभासः। एवं स्थिते शिवादिधरण्यन्तस्य षट्त्रिंशत्तत्त्वव्रातस्येश्वरप्रत्यभिज्ञायां प्रतिपादितस्याभासरूपता। यथाह—

निराभासात् पूर्णादहमिति पुराभासयति यद्
द्विशाखामाशास्ते तदनु च विभङ्क्तुं निजकलाम्।
स्वरूपादुन्मेषप्रसरणनिमेषस्थितिजुषस्
तदद्वैतं वन्दे परमशिवशक्त्यात्म निखिलम्॥ इति।

इदमत्रावधेयम्—यद्यप्युत्पलाचार्य ईश्वरप्रत्यभिज्ञाकारिकायां तद्वृत्तिटीकयोश्च, एवं तदनुसार्यभिनवगुप्तपादो विमर्शिनी-विवृतिविमर्शिन्योस्तथा च षट्त्रिंशत्तत्त्वसन्दोहादिष्वपरेषु ग्रन्थेषु षट्त्रिंशत्तत्त्वान्येव प्रतिपादितवन्तौ, तथापि सोमानन्दः शिवदृष्टौ, तथैव चाभिनवगुप्त-पादस्तन्त्रालोक-परात्रिंशिकाविवृत्यादिग्रन्थेषु सप्तत्रिंशं परशिवाऽनुत्तरादिशब्दद्योत्यं स्वीकृतवन्तौ। न च सप्तत्रिंशं तत्त्वमुत्पलाचार्यस्याऽनभिमतमासीत्, यतः स स्वयमेवेश्वरप्रत्यभिज्ञाकारिकां शिव-दृष्ट्यनुसारिणीं प्राह—

इति प्रकटितो मया सुघट एष मार्गो नवो
गुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा॥ इति।

परन्तु शैवाद्वैते प्रविभागदृष्ट्या परतत्त्वस्य रूपद्वयं स्वीक्रियते, विश्वोत्तीर्णं विश्वमयञ्च। न च तयोः पार्थक्यं कथञ्चन। विश्वोत्तीर्णतायामपि विश्वरूपता विश्वरूपतायां चापि विश्वो-त्तीर्णताऽविच्छिन्नतयैवास्ते। एतच्चाग्रे वितनिष्यते। विश्वमयस्वरूपप्रतिपादनमात्रपरेणोत्पला-चार्येण सप्तत्रिंशं तत्त्वं न संकीर्तितम्। यथाह —

'सर्वभूतस्थम्' इत्यन्तोऽयमद्वयोपदेशो मन्तव्यः। एवं सर्वभागे प्रकाशभागे च स्थिते गुणप्रधानताकृतं संसारासंसाररूपत्वं प्रतिपादितम्। गलिते तु समस्ते भेदलेशे परमशिवता दशा इह न वितानिता, तावत् सर्वात्मरूपतामुखेन तत्प्रत्यभिज्ञानोपक्रमात्।

(ई० प्र० वि० वि० भा० १ पृ० ४७)

विश्वोत्तीर्णोऽनुत्तर इति परः शिव इति चोच्यते। अद्वैतशैवनये जगदुत्पत्तिसिद्धान्तः परमार्थानुभवसिद्धान्तात् प्रमाणसिद्धान्ताच्च कथमपि न भिन्नः। यस्मादेव तत्त्वाज्जगदुद्भवस्तदेव तत्त्वं मोक्षे भाति, तन्निर्भरमेव च ज्ञानस्मृत्यादि। जगदुद्भावकतत्त्वस्य न किमपि क्षीयते जगदुद्भावने, नापि तस्माद् बाह्यं किमप्यनिर्वचनीयं वेदान्तिनयेऽन्ततो विनाशिनी मायेव भासमानजगत्कारणम्। यतो मोक्षो न मायानाशादपि तु मायोत्तीर्णत्वात्। परं तत्त्वं च न मोक्ष एव भाति, अपि तु साधारणस्यैन्द्रियकानुभवस्य सम्यग् विश्लेषणे क्रियमाणे समग्रज्ञानाग्रज्ञातृस्पर्शदशासु तथा तत्फले स्फुटं लक्ष्यते। यदाह —

न परं तदवस्थायां व्यवस्थैषा व्यवस्थिता।
यावत् समग्रज्ञानाग्रज्ञातृस्पर्शदशास्वपि॥
स्थितैव लक्ष्यते सा च तद्विश्रान्त्या तथा फले। (शि० दृ० ७) इति।

तच्चैवम्—

शैवाद्वैते शक्तिशक्तिमतोरभेदः। यथाह —

न शिवः शक्तिरहितो न शक्तिः शिववर्जिता।
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव॥ इति।

यथा वैयाकरणनये। यथाह—

"तत्स्वरूपत्वेनाऽव्याहता नित्या अपि यस्य कलाः शक्तयः" (वा० प० टी० १-३) इति।

तच्चैक्यं सर्वशक्तिसामरस्यरूपम्। यथैव विभावानुभावव्यभिचारिस्थायिनां पानकरसन्यायेन सामरस्यरूपः सहृदयप्रेक्षकानुभूयमानो रस एकः, तथैव सर्वशक्तिसामरस्यात्मकः परः शिव एक एव परं तत्त्वम्। स च प्रकाशविमर्शात्मा, स्वप्रकाशः, स्वप्रकाशविश्रान्तः, परानपेक्षः, सर्वशक्तिसामरस्यतया पूर्णः, पूर्णत्वात् स्वप्रकाशस्वरूपविश्रान्तत्वाच्चानन्दरूपो विश्वोत्तीर्णः परः शिवः, स्वस्वरूपभूतायाश्चितः स्वस्वरूपविश्रान्तिलक्षणस्य चानन्दस्यैक्यं द्योतयितुमानन्दापरपर्यायान्निर्वृतिशब्दान्नित्ययोगद्योतकमत्वर्थीयाऽच्प्रत्ययान्तान्निष्पन्नेन 'निर्वृत'शब्देन स्वप्रकाशा-

परपर्यायचिच्छब्दसमस्तेन वृत्तौ पदार्थानामेकीभावाच्चिन्निर्वृत्योः प्रकाशानन्दयोरत्यन्ताबियोग-मेकार्थीभावं च द्योतयता 'निर्वृतचित्'शब्देनाभिधीयते। स च शक्तिरूपेणात्मसात्कृतसमस्त-वेद्यार्थतया विभुः, ततः पृथक्सत्ताकस्य कस्याप्यभावात् पूर्णः, कालस्य विश्वरूपतायां तदव-भासितनियतक्रमसूर्यादिसञ्चाररूपतया परिमितप्रमातारं प्रत्येव भासमानतया कालानवच्छिन्नो नित्यः, अहमिति सहजप्रत्यवमर्शात्मप्रकाशस्वरूपः, चिदानन्दमात्रानुभवस्तल्लयश्च।

## परशिव-परब्रह्मणोः पारस्परिको भेदः

अद्वैतवेदान्तिभिरपि सच्चिदानन्दं ब्रह्मेति ब्रह्मणः स्वरूपलक्षणमुच्यते। "मूर्तिक्रियाविवर्तावि-विद्याशक्तिविलसितमात्रम्" ( ई० प्र० वि० वि० भाग ३ पृ० १४ ) इत्यादि च वदद्भिर्नियतक्रम-क्रियावैचित्र्यरूपस्य कालस्य मायाशक्तिविलसितरूपत्वं स्वीकुर्वद्भिर्मायोत्तीर्णं ब्रह्म न कालः कल-यितुं शक्नोतीति कालानवच्छिन्नतया नित्यं मन्यते।

साधारणतो वेदान्तिनां विशेषतः शाङ्करवेदान्तिनामुपरि बौद्धदर्शनस्य महान् प्रभावः। ते शून्यवादिभिर्बौद्धैरभ्युपगतं परमार्थसत्यं संवृतिसत्यमसत्यमिति प्रविभागमनुसरन्तस्त्रिविधं सत्त्वम्—परमार्थसत्त्वम्, व्यावहारिकापरपर्यायमर्थक्रियासामर्थ्यं सत्त्वम्, प्रातिभासिकं च सत्त्वं स्वीकुर्वन्ति। एवञ्च नागार्जुनेतिप्रसिद्धस्य बौद्धविदुषः—

सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः॥

इति मतेन प्रभाविताः स्वाभ्युपगतमोक्षेतरावस्थानुभूतसर्वपदार्थाऽभावरूपमेकमेवाद्वितीयं ब्रह्म प्रतिपादयन्तस्तदनुकूलमेवौपनिषदवाक्यानि सङ्गमयन्तो ब्रह्मणः संसारस्य च सत्यतायां स्वीकृतायामेकत्वज्ञानेन नानात्वज्ञानापनोदस्यायुक्तत्वात् शुक्तौ ज्ञातायां तत्र प्रतिभातस्य रजतस्येव ब्रह्मज्ञाने संसारदशानुभूतसर्वपदार्थानां समूलमात्यन्तिकं ध्वंसं मन्वाना ब्रह्मेतरस्य सर्व-स्यापि मिथ्यात्वं स्थापयन्तः शून्यं लक्षयद्भिर्बौद्धैः प्रयुक्ताम्—

"तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव"

इति भाषां विचारसरणिं चोपाददानाः संसारकारणं सदसद्भ्यामनिर्वचनीया मायेति वदन्तः—

"ब्रह्म सत्यं जगन्मिथ्या"

इति सिद्धान्तमुद्घोषयन्ति । अत एवाभिनवगुप्तपादः—

"वेदान्तिनः शून्यवादाविदूरवर्तिनः" इत्युल्लिखितवान्, तदनुसारिणा च रामानुजाचार्येण "शङ्करः प्रच्छन्नबौद्धः" इत्युक्तम् ।

वेदान्तनये एकं ब्रह्म एव सत्, ब्रह्मण एव सत्तालक्षणः स्वभावः, नान्यत्किञ्चित् परमार्थतोऽस्ति, कस्याप्यन्यस्य परमार्थानुभवेऽस्तित्वाभावात् । व्यावहारिकाणां सर्वेषां वस्तूनामस्तित्वं ब्रह्मपरिणामवादिनः पुरुषाणां पार्थिवत्वस्वभावस्य केशनखादिष्विव ब्रह्मणः सत्तालक्षणस्य स्वभावस्याकाशादिष्वनुवर्तनादिति मन्यन्ते । परन्तूत्कृष्टा वेदान्तिनः—

कृपणधीः परिणाममुदीक्षते
क्षपितकल्मषधीस्तु विवर्तताम् ॥

इत्युद्घोषयन्तो घटः सन्, घटो भवति, घट इष्ट इत्यादिर्लौकिकव्यवहारः सच्चिदानन्दब्रह्मैक्याध्यासादिति घटादीनामस्तित्वमध्यासमात्रादिति मन्वानाः—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

इति स्वीकुर्वन्ति । एवं चानुभूयमानानां सर्वेषां पदार्थानां शुक्तौ भासमानस्य रजतस्येव काल्पनिकतया, कल्पितस्य च—

"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"

इति योगनयानुसारमवस्तुत्वात् सति ब्रह्मण्यध्यस्यमानत्वात्तस्य चाधिष्ठानपरमार्थत्वादवस्तुसत्त्वमभ्युपगम्यते वेदान्तिभिः । तथा हि—ये दृष्टनष्टस्वरूपा न ते परमार्थसन्तः, यथा मृगतृष्णिकोदकादयः, तथा च सर्वं विकारजातम्, तस्मादवस्तुसत् । इदञ्च पूर्वोक्ताभिः सर्वशून्यत्वसाधनाय प्रयुक्ताभिः शून्यवादियुक्तिभिः साध्यते । तथा हि–सत्स्वभावं चेद्विकारजातं कथं कदाचिदसत्, अथाऽसत्स्वभावं कथं कदाचित् सत्, सदसतोरेकत्वविरोधात् । सदसत्स्वभावत्वं तु सदसतोः पारस्परिकविरोधान्न शक्यतेऽभ्युपगन्तुम् । अतश्च विकारजातं न वस्तुसत्, ततश्चानिर्वचनीयमनृतञ्च, अनिर्वचनीययाऽज्ञानरूपया मायया कल्पितत्वात् । अतः सत्त्वमत्राधितत्वममृषात्वं सत्यत्वं वा, अत एव ब्रह्मविषये सत्यशब्दोऽपि प्रयुज्यते—

"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादौ ।

अस्मादेतत् स्फुटीभवति यद् ब्रह्मणः स्वरूपलक्षणे प्रयुक्तश्चिच्छब्दो ज्ञानापरपर्यायः । यद्यपि प्रत्यक्षस्थले वृत्तिविशिष्टं चैतन्यं ज्ञानमिति स्वीक्रियते, एवञ्च—

"ज्ञानं ज्ञानान्तरवेद्यं न भवति"

इति न्यायात् स्वप्रकाशत्वं तस्योरीक्रियते, तथापि वृत्तीनामागमापायित्वेनावस्तुत्वात् सर्ववृत्तिविरहितं स्वप्रकाशतत्त्वमेव 'चित्'शब्देनोच्यते । अतः—

"चित्त्वं स्वप्रकाशत्वम्"

इति वेदान्तसिद्धान्तः । घटादेरिव प्रदीपेन, ब्रह्मणः केनचित् प्रकाश्यत्वाभावात् , सूर्यादिवच्च स्वयंप्रकाशत्वात् । 'चित्'शब्दस्थाने क्वचन 'चैतन्य'शब्दोऽपि प्रयुज्यते, वेदान्तनये ज्ञानं चैतन्यं ब्रह्मेत्याद्यनर्थान्तरमित्याद्युक्तेः ।

तृतीयः 'आनन्द'शब्दो ब्रह्मणः स्वरूपलक्षणे प्रयुक्तो भारावतरणन्यायेन दुःखाभावद्योतकः । दुःखाभावश्च द्विविधः—यत्किञ्चिद्दुःखाभावः, यावद्दुःखाभावश्च । आद्यः संसारदशायाम्, द्वितीयस्तु मोक्षावस्थायामिति साधारणतया वेदान्तिमते यावद् दुःखाभाव एवानन्दः । निरतिशयसुखापरपर्यायत्वेनाऽप्येष शब्दः प्रयुज्यते । सुखं हि द्विविधम्—सातिशयं निरतिशयं च । आद्यं विषयानुषङ्गजनितान्तःकरणवृत्तितारतम्यकृतानन्दलेशाविर्भावरूपम् । एतदर्थमपि क्वचनानन्दशब्दः प्रयुक्त उपलभ्यते । यथा—

"शुभकर्मजन्यवृत्तिव्यक्तं चैतन्यमानन्दः" (वे० सू० २०८) इति । अपरं तु ब्रह्मैव ।

"रसो वै सः, रसमेवाऽयं लब्ध्वा आनन्दीभवति । को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् , एष एव ह्यानन्दयाति" ( तै० २-७ ) इत्युपनिषद्वाक्यानुसारं 'रस'शब्दोऽप्यानन्दापरपर्यायत्वेन गृह्यते । परन्तु वेदान्तनयमाश्रित्येमां श्रुतिं व्याचक्षाणैः पण्डितराजजगन्नाथै रसस्वरूपमेवं प्रतिपादितम्—

"वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः" इति ।

अस्मिन् व्याख्याने स्वीक्रियमाणे न भवति रसस्यानन्दापरपर्यायत्वम्, अपि तु ततः किमपि वैलक्षण्यम् , रत्याद्यवच्छिन्नत्वस्याभ्युपगमात् । रसव्याख्याने चाभिनवगुप्तपादमतमेवमुपन्यस्तं पण्डितराजैः—

"इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणचिद्विशिष्टो रत्यादिः स्थायीभावो रसः" इति।

एतच्चाभिनवगुप्तपादमतमबुद्ध्वैव लिखितमिति स्पष्टीकृतं मया स्वीय-'कम्पेरेटिव् ईस्थेटिक्स्'-इत्याख्यपुस्तकस्य प्रथमभागे। न संभवतीदं मतमभिनवगुप्तपादस्य, यतः स निर्विशेषाद्वैतापरनामस्वातन्त्र्यवादी। निर्विशेषाद्वैतिनश्चायमभ्युपगमः—

"बाह्यत्वग्राह्यत्वाऽयोगान्न तेन (आत्मतत्त्वेन) तुल्यकक्ष्यतया परं किञ्चन चकास्ति। तुल्यकक्ष्यताप्रतिभासकृतश्च गुणभावप्रधानभावाभ्यां धर्मधर्मिभाव-विशेषणविशेष्यभावोपधानोपधेयभावादिव्यवहारः। एवञ्च विशेषणविशेष्यभावमुखेन यो व्यवहारः स आत्मनि नोपपद्यत इति नासौ कस्यचिद् धर्मः, नापि तस्य कश्चिद् धर्मः।" (ई० प्र० वि० भाग १—१४७) इति।

रसस्यानन्दरूपता त्वभिनवगुप्तनये न साधारणीकृतस्य स्थायिनः साधारणीभूतेन सहृदयेनानुभूयमानतादशायाम्, अपि तु तदुत्तीर्णत्वे। तथा हि—अभिनवगुप्तपादो रसशब्दमर्थद्वये प्रयुङ्क्ते। (१) रस्यते आस्वाद्यत इति रसः, तथा च साधारणीभूतेन सहृदयेन आस्वाद्यमानः साधारणीभूतः पानकरसन्यायेन स्थाय्यादीनां परस्परसंमिश्रणोत्थो रसो रस्यमानत्वाद्रस इत्युच्यते। अस्मिन्नर्थे रसस्य विषयरूपता।

(२) रसनं रसः, अस्मिन् विग्रहे तु क्रियमाणे रसो न विषयरूपः, अपि तु क्रियारूपः। एवं च रसना, चर्वणा, निर्वृतिः, प्रमातृविश्रान्तिः, चमत्कृतिरित्याद्यपरपर्यायैरुच्यते। प्रमातृविश्रान्तिः, स्वात्मविश्रान्तिरेवानन्दः। एवं चानन्दरूपता रसस्य न विभावादीनां सामरस्यतया रस्यमानतादशायाम्, अपि तु तदुत्तीर्णत्वे स्वात्ममात्रपरामर्शदशायाम्। यथाह—

"लोके सकलविघ्नविनिर्मुक्ता संवित्तिरेव चमत्कार-निर्वेश-रसना-आस्वादन-भोगसमापत्ति-लय-विश्रान्तिशब्दैरभिधीयते" (अ० भा० भाग १ पृ० २८१) इति।

आनन्दशब्दस्य सुखापरपर्यायत्वेन साधारणतः प्रयुक्तस्य परमानन्दाद् भेद इत्थं प्रदर्शितः—

"देहादिसंकोचकलुषाऽपरिपूर्णप्रत्यगात्माऽहंभावनिष्ठत्वेन शरीरस्य रिक्ततया क्षुधातुरस्य व्यतिरिक्तान्नाभिलाषविवशीकृतमतेरात्मपरामर्शोऽयमेकघनवृत्त्या यतो न संभवति, ततोऽयमनानन्द इवास्ते।......

यदा त्वन्नपरिपूर्णजठरताऽस्य, तदा तद्रिक्ततोद्रेकरूपा तावदपूर्णता नष्टा। संस्काररूपतया तु तदानीं यदभिलषणीयं कान्तालिङ्गनादि परामर्शनीयं स्थितम्......तद्योगादपूर्णोऽयमानन्द इति परमानन्दो न भवति। सांसारिकश्च सर्वोऽस्यानन्दः—"लाभे भाविवियोगभीरुः" इति, "विषयो विषयान्तरार्थितां जनयन् वा जनयेत् कथं सुखम्" इति च न्यायेन व्यतिरिक्ताकाङ्क्षा—विच्छेदमयतां सर्वात्मना न स्वीकुरुत इति ततोऽप्यपूर्ण एव। यस्तु तत्राप्यानन्दांशः, तत्र स्वात्मपरामर्शरूपितैव प्रयोजिका। तत एवोक्तम्—

त्रैलोक्येऽप्यत्र यो यावानानन्दः कश्चिदीक्ष्यते।
स बिन्दुर्यस्य तं वन्दे देवमानन्दसागरम्॥ इति।

........'मधुरादिरसास्वादे तु विषयस्पर्शव्यवधानम्, ततोऽपि काव्यनाटकादौ तद्व्यवधानशून्यता, तद्व्यवधानसंस्कारानुवेधस्तु (वर्तत एव), तत्रापि तु तथोदितव्यवधानांशतिरस्क्रियासावधानहृदया लभन्त एव परमानन्दम्।" (ई० प्र० वि० वि० भा० २-१७८-९) इति।

अतो रसास्वादस्य परकोटौ संवेदनस्यैकघनस्यास्वाद्यमानत्वादानन्दरूपता सर्वरसानामिति शैवाचार्याऽभिनवगुप्तपादसिद्धान्तः। यथाह—

"अस्मन्मते तु संवेदनमेवैकघनमास्वाद्यते। तत्र का दुःखाशङ्का।" (अ० भा० भाग १-२१६) इति।

अस्मिन् व्याख्याने स्वीक्रियमाणे "समानकर्तृकयोः पूर्वकाले क्त्वा" इति सूत्रानुसारं प्रयुक्तः पूर्वोक्तोपनिषद्वाक्ये 'लब्ध्वा' इति शब्दे क्त्वाप्रत्ययः संगच्छते।

इदञ्च वेदान्तनये न संगच्छते, वेदान्तिभिर्ब्रह्मणो निर्विमर्शस्वप्रकाशमात्रत्वस्य स्वीकरणेन स्वप्रकाशमण्यादिवत् स्वात्मपरामर्शशून्यत्वमभ्युपगच्छद्भिर्जडब्रह्मवादस्य स्थापितत्वात्।

न चाद्वैतशैवनये 'अहम्' इति स्वात्मपरामर्शरूपविमर्शस्वीकारे परतत्त्वस्य विकल्पतापत्तिः, "साऽभिलापं विकल्पाख्यम्" इति नयेन विकल्पस्याभिलापयोजनारूपत्वात्, प्रकृते च 'अहम्' इत्यभिलापयोगस्य स्वीकृतत्वात्। मैवं भ्रमितव्यम्। यतो न विकल्पलक्षणं तत्र संगच्छते। विकल्पो हि "द्वयाक्षेपी विनिश्चयः"। विविधा कल्पना, एकस्यापि विविधत्वेन च शङ्कितस्य कल्पोऽन्यव्यवच्छेदनं विकल्पः। अतश्च विकल्पेऽवश्यं तदतद्रूपद्वयेन भवितव्यम्। अन्यथा किं योज्येत, किं विभज्येत, किञ्च शङ्क्येत। एवंविधश्च विकल्पो मायापद एव सम्भवति, यतस्तत्र घटाघटौ भिन्नौ प्रकाशेते। एवञ्च तदतत्प्रतिभाभाजा

संकुचितप्रमात्रा घटप्रत्ययावसरेऽतदोऽघटरूपस्यान्यस्य घटदेशे संभाव्यमानतया समारोपितस्य निषेधलक्षणोऽपोहः क्रियते। तदनुप्राणिता च विकल्परूपता 'घट एवायं न पटः' इत्येतस्य निश्चयस्य, एवार्थस्य संभाव्यमानाऽपरवस्तुनिषेधरूपत्वात्। एष एव परिच्छेदनात् तक्षणकल्पात् परिच्छेद उच्यते।

एवं विकल्पस्य स्वरूपे निर्धारिते 'अहम्' इति यः शुद्धो विमर्शस्तस्य विकल्परूपता न कथमपि शक्यते समर्थयितुम्। यतो योऽयं विमर्शात्मप्रकाशरूपः परतत्त्व-परशिव-अनुत्तरादि-शब्दव्यपदेश्यः, तस्य स्थाने यः संभाव्यते स तावदप्रकाशरूपो न शक्यतेऽभ्युपगन्तुम्, तुल्यकक्ष्यस्यैव हि संभाव्यमानत्वं भवति। न चाप्रकाशस्य प्रकाशेन सह तुल्यकक्ष्यताऽभ्युपगमो युक्तियुक्तः, प्रकाशाप्रकाशयोरत्यन्तविरुद्धत्वात्। पटादिरूपस्याघटस्य तु न घटेन सह प्रकाशाप्रकाशयोरिवात्यन्तिको विरोधः, उभयोरप्येकेन्द्रियग्राह्यत्वेन सत्त्वेन च तुल्यकक्ष्यत्वात्। अभ्युपगम्यमानेऽपि प्रकाशाप्रकाशयोस्तुल्यकक्ष्यत्वे, संभावनाबलादारोपणबलाच्चाप्रकाशस्याप्रकाशरूपत्वं विघटेत। नहि संभावयिता अरोपयिता वा प्रमाताऽप्रकाशमानस्य संभावनामारोपणं वा कर्तुं शक्नोति। अतः प्रकाशतुल्यकक्ष्यस्यान्यस्याप्रकाशस्यापोहनात्मकव्यापारसहिष्णोरवभासमानत्वाभावादहंपरामर्शस्यापोहनव्यापारनिर्भरं न शक्यते विकल्परूपत्वं वक्तुम्। शुद्धाहंपरामर्शातिरिक्तस्य संभाव्यमानतायामभ्युपगतायामपि—

प्रागिवार्थोऽप्रकाशः स्यात् प्रकाशात्मतया विना।
न च प्रकाशो भिन्नः स्यादात्माऽर्थस्य प्रकाशता॥

इति नयेन तस्यापि प्रकाशमानतास्वीकारस्यानिवार्यत्वेन परप्रकाशस्य स्वरूपे देशकालभेदाभावाद् भिन्नतया संभाव्यमानस्यापि तदेकरूपत्वादपोह्यस्य द्वितीयस्याभावान्न संभवति विकल्परूपता शुद्धाऽहंपरामर्शस्य।

## अहंपरामर्शद्वैविध्यम्

अहंपरामर्शो द्विविधः, शुद्धोऽशुद्धश्च। पूर्वः परतत्त्वरूपः, एवं च पूर्वोक्तयुक्त्या निर्विकल्परूपः। अपरस्तु परिमितप्रमातृनिष्ठः, एवं च तदपेक्षया द्वितीयस्य परिच्छिन्नस्यापोह्यस्य सत्त्वाद् विकल्परूपः।

इदमत्रावधेयम्—यथा वैयाकरणनये 'अल्' इति प्रत्याहारान्तर्गताः सर्वे स्वरा व्यञ्जनाश्च, न च ततो बाह्यस्तदवच्छेदकश्च कोऽपि वर्णः; तथैव 'अहम्' इति शब्दे 'अह्' इत्यंशोऽकारादारभ्य

हकारपर्यन्तवर्णमालाद्योतितं सर्वमपि भावजातमभिधत्ते । 'अम्' इत्यंशश्च सर्वेषां बिन्दुवद्-भेदेनावस्थानम् । यदाहाभिनवगुप्तपादाचार्यः—

"अनुत्तराद् आदिवर्णादानन्दादिपरामर्शान्तराविर्भावकारित्वाच्छक्तिस्वरूपिणी या हान्ता प्रसृतिः, हकारपर्यन्तेन स्थूलेन रूपेण स्फुरन्ती, सैव पुनः—

"आदिरन्त्येन सहेता" ( पा० २।२।७२ )

इति नीत्याऽकारहकारात्मना रूपेण प्रत्याहृतं गर्भीकृतमशेषमानन्दाद्यमृतबीजपर्यन्तं विश्वं यया तथाभूता सती, अनुत्तरे निर्विभागप्रकाशात्मनि परस्मिन् रूपे, निलीयते विश्राम्यति येन 'अहम्' परामर्शो जायते" इत्यादि तन्त्रालोके तृतीयाह्निके द्विशततमश्लोकादारभ्य पञ्चाधिक-द्विशततमश्लोकपर्य्यन्तम् ।

एवंरूपः शुद्धाहंपरामर्शो विमर्शशब्देनाप्यभिधीयते । विमर्शश्च परावाग्रूपः शैवनये । यथाह—

चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।<br>
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥ इति,

"एवञ्च विमर्शनं-परावाक्शक्तिमयम्" ( भां० भा० १, २६४ ) इति च । विमर्शाऽपर-पर्याया च परा वाक् शैवागमानुसारिभिर्नागेशभट्टादिभिर्वैयाकरणैः स्वीकृतैव, यस्यां नास्ति विकल्पत्वलेशः केषाञ्चनापि मत इति शुद्धाऽहंप्रत्यवमर्शस्याऽविकल्परूपत्वं निर्विवादम् ।

## भर्तृहरिनये परतत्त्वस्यान्तःकृतानन्तविश्वरूपता प्रकाशविमर्शमयता च

भर्तृहरिर्न केवलं काश्मीरशैवाद्वैतसाधारणं स्वातन्त्र्यवादमपि त्वद्वैतशैवागमप्रतिपादितान् अन्यानपि बहून् सिद्धान्तान् अनुसरति । तेषु द्वावेव प्रकरणसंबद्धाविह प्रदर्शनीयौ ।

( १ ) भर्तृहरिनये ब्रह्मणोऽन्तः सकलोऽपि विकारग्रामस्तदेकीभावेन पारस्परिकभेद-विरहेण सृष्टेः प्रागवतिष्ठते । इयं खलु ब्रह्मणः संवर्तावस्था । विवर्तावस्थायां तु तत एव सकलमेव चराचरं प्रथमत उत्पद्यते । प्रथममनाकृतं रूपम्, द्वितीयं तु व्याकृतं रूपम् । द्वयमपि क्रमशो विद्याऽविद्यारूपतच्छक्तिप्रभावात् । यथा स्वप्नावस्थायामेक एव ज्ञानक्षणो भिन्नजातीयाऽनेक-पदार्थावभासी जायते, तथैव संवृतं ब्रह्म विवर्तेऽनेकपदार्थावभासि जायते । अतो भर्तृहरिनये संवृते ब्रह्मणि तदेकात्मतया विद्यमानं भावजातं सृष्टिकाले परस्परविविक्तं भासते स्वीयाऽविद्या-शक्तिबलात् । यथाह स्ववृत्तौ—

"तत एव हि शब्दाख्यादुपसंहृतक्रमाद् ब्रह्मणः सर्वविकारप्रत्यस्तसमये संवर्तादनाकृतात् पूर्वं विकारग्रन्थिरूपत्वेनाऽव्यपदेश्याज्जगदाख्या विकाराः प्रक्रियन्ते" (वा० प० चा० सं०–६)इति ।

अत इदं सुस्पष्टं यद् भर्तृहरिणा विवर्तशब्दो न वेदान्तिस्वीकृतेऽर्थे प्रयुज्यते । अस्यां व्याख्यायां स्वीकृतायां 'विवर्तते' इति क्रियायाः कर्तृब्रह्माश्रितत्वम् , कर्तुश्च ब्रह्मणः स्वव्यतिरिक्तस्य कस्याप्यनपेक्षणात्तस्य विवर्तनक्रियायां स्वातन्त्र्यं च संगच्छेते ।

( २ ) प्रकाशविमर्शमयत्वं परतत्त्वस्यैवं सिद्ध्यति—भर्तृहरिमते त्रयः प्रकाशाः, ये न केवलं स्वयं प्रकाशन्ते, अपि तु परानपि प्रकाशयन्ति । एकोऽग्निः, यस्तमोऽपनयनादात्मानं परञ्च घटादि प्रकाशयति । अपर आन्तरो बुद्धिरूपः, यो बाह्येन्द्रियग्राह्यान् घटपटादीन् आन्तरांश्च सुखादीन् प्रकाशयति, स्वयं विदितत्वाच्चात्मानम् । तृतीयस्तु शब्दाख्यः प्रकाशः, यः प्रकाशरूपं जातवेदसं बुद्धिं तथाऽप्रकाशरूपान् घटादीन् , ये नाग्निवद् बुद्धिवद्वा स्वयंप्रकाशाः, तान् सर्वान् प्रकाशयति, स्वयञ्च प्रकाशते । यत्र सर्वं स्थावरजङ्गमात्मकं विश्वमुपनिबद्धम् , यस्मात् पृथक्सत्ताकं स्वतन्त्रं किमपि नास्ति, यः सर्वेषामाश्रयभूतः । यथाह—

"इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः । तद्यथा योऽयं जातवेदा यश्च पुरुषेष्वान्तरः प्रकाशो यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः, तत्रैतत् सर्वमुपनिबद्धं यावत्स्थास्नु चरिष्णु चेति ।" ( वा० प० चा० सं० २४ )

एवञ्च शब्दतत्त्वस्य प्रकाशरूपत्वं स्वयंप्रकाशत्वं परप्रकाशयितृत्वं सर्वाश्रयत्वञ्च सुस्पष्टम् । यत्खलु शब्दस्य स्वप्रकाशरूपज्ञानप्रकाशयितृत्वं तदेव तस्य विमर्ष्टृत्वं प्रत्यवमर्शित्वं वा । किमपि ज्ञानं तथाविधं न भवति यद् वाग्व्याप्तम् , वागनुषक्तम् , वागनुगतं न भवति ।

अत्र वैयाकरणनैयायिकयोर्मतभेदः । नैयायिका निर्विकल्पकज्ञानस्याशाब्दत्वमभ्युपगच्छन्ति ।

"अशाब्दमर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नम्" ( न्या० द० २१ )

इति हि तन्मतम् । स्पष्टीकृतं चेदं वाचस्पतिमिश्रेण न्यायवार्त्तिकतात्पर्यटीकायाम् । यथाह—

"तत्र नामरहितमविकल्पं नास्तीति ये विप्रतिपद्यन्ते तन्मतमपाचिकीर्षुरुपन्यस्यति भाष्यकारः "यावदर्थं नामधेयशब्दाः" ( न्या० वा० ता० टी० ८२ ) इति ।

एवञ्च निरस्यमानं वैयाकरणमतं संक्षेपतो निर्दिशन् स एवाह—

"तथा च नाविकल्पं शब्दरहितमस्तीति तात्पर्यार्थः" (न्या० वा० ता० टी० ८३) इति।
उदाहरति चैतन्मतसमर्थकं वाक्यपदीयवाक्यम्—

"न सोऽस्ति प्रत्ययो लोके" इत्यादि।

अतो वैयाकरणनये किमपि ज्ञानं सविकल्पकं निर्विकल्पकं वा शब्दरहितं न भवतीत्यत्र नास्ति विवादावसरः। ज्ञानस्य च वाग्रूपता शाश्वती, नित्या, सा प्रत्यवमर्शिनी, प्रकाशरूपज्ञानस्यापि प्रकाशिका, यथा व्यवसायस्य प्रकाशकोऽनुव्यवसायः। प्रत्यवमर्शरूपवाग्व्यापारं विना प्रकाशरूपस्यापि ज्ञानस्य न प्रकाशः। एवञ्च ज्ञानस्य शाश्वतीं प्रत्यवमर्शरूपाम्, विमर्शरूपां वा वाग्रूपतां मन्वाना वैयाकरणाः परतत्त्वस्य प्रकाशविमर्शरूपतामद्वैतशैवानुमतां स्वीकुर्वन्ति। यथाह—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥ इति।

"यथा प्रकाशकत्वमग्नेः स्वरूपं चैतन्यं वाऽन्तर्यामिणः, तथा ज्ञानमपि सर्वं वाग्रूपमात्रानुगतम्। याऽप्यसञ्चेतितावस्था तस्यामपि सूक्ष्मो वाग्धर्मानुगमोऽभ्यावर्तते" (वा० प० चा० सं० ११२)।

अतः परतत्त्वस्य जाड्यमस्वीकुर्वाणा अद्वैतशैवाः प्रकाशविमर्शरूपमेव परं तत्त्वं स्वीकुर्वन्तीति स्वप्रकाशमात्रपरतत्त्ववादिभ्यो वेदान्तिभ्यस्तेषां भेदः। यथाह—

स्वभावमवभासस्य विमर्शं विदुरन्यथा।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः॥

(भा० भा० १–२४१)

## वेदान्तिसंमतस्य भेदस्याविद्योपप्लवरूपतापर्यालोचनम्

स्वप्रकाशमात्रचिद्रूपस्यैकत्वं वास्तवम्, भासमानभावरूपभेदस्त्वविद्योपप्लवादिति मतेऽयं दुःसमाधेयः प्रश्नो जागर्ति—

कस्यायमविद्योपप्लवः? ब्रह्मणो हि विद्यैकरूपस्य न संभवत्यविद्यारूपता, न चान्यः कश्चिदस्ति जीवादिर्यस्याविद्या भवेत्। अनिर्वाच्येयमविद्येति चेत्, कस्यानिर्वाच्या? इति

दुरुत्तरम्। स्वरूपेण भाति, ब्रह्मावृणुते, जगतश्च कारणमित्यभ्युपगमे कथमनिर्वाच्येति शक्यते वक्तुम्? युक्त्या नोपपद्यत इति चेत्, अनुभवापह्नवकारिणी का खलु युक्तिर्नाम? सद्रूपमेव ब्रह्म चकास्त्यविकल्पके, विकल्पबलात्तु भेदोऽयमिति चेत्, कस्यायं विकल्पनव्यापारः? ब्रह्मणश्चेत्, अविद्यायोगोऽस्यापतति। न चान्योऽस्ति यस्यायमुच्येत। अविकल्पकं सत्यं विकल्पकमसत्यमित्ययं विभागः कथं शक्यसमर्थनः, उभयोरपि भासमानत्वाविशेषात्। भासमानोऽपि भेदो बाधित इति चेत्, यथा मोक्षदशायां भेदो बाध्यते, तथा संसारदशायामभेदोऽपि बाध्यत एव। विपरीतसंवेदनोदय एव हि बाधो नान्यः कश्चित्। तस्मात् स्वतन्त्रप्रकाश एव शरणम्।

## सत्त्व-समीक्षा

न भावानां नैयायिकाभ्युपगतसत्ताख्यपरजातिसम्बन्धः सत्त्वम्। यत इदं लक्षणमव्याप्त्यतिव्याप्त्यादिदोषदूषितम्। तत्र सत्तायाः सामान्यादिभ्यो व्यावृत्तेरव्यापकत्वम्। तत्राप्यनुवृत्तावनवस्था। सत्तायां हि सत्तायामङ्गीकृतायां तत्राप्यन्या तत्राप्यन्येत्यनवस्थाया दुर्निवारत्वात्, अभावेऽपि सत्ताभ्युपगमे तत्स्वरूपव्याघातापातात्।

नापि बौद्धाभ्युपगतमर्थक्रियाकारित्वं सत्त्वम्। सत्त्वं हि भावेषु ध्वंसात् प्राक् सर्वदा भवति। न चार्थोऽर्थक्रियाविष्टः सर्वदा भवति। अतोऽर्थक्रियाकारित्वाभावदशायां सतोऽर्थस्यासत्त्वापत्तेर्नार्थक्रियाकारित्वं सत्त्वमभ्युपेयम्। अत एवोक्तम्—

अर्थक्रियाऽपि सहजा नार्थानामीश्वरेच्छया।<br>
नियता सा हि तेनास्य नाक्रियातोऽन्यथा भवेत्॥ इति।

(भा० भा० १–१२०)

नाप्यर्थक्रियाकरणयोग्यत्वं सत्त्वम्। भावस्य सत्त्वमसत्त्वं वेति झटिति निश्चयनसमयेऽर्थक्रियाकरणयोग्यत्वनिर्णयस्याऽशक्यत्वात्। अतः प्रकाशमानत्वमेव भावानां सत्त्वमित्यद्वैतशैवनिश्चयः। एवं च शैवनये न मोक्षावस्थायामेवाद्वैतम्, अपि तु संसारावस्थायामपि। सर्वस्यापि भावजातस्य प्रकाशमानतया प्रकाशरूपपरतत्त्वाभेदात्। तच्चेत्थं साध्यते—

वर्तमानत्वेन स्फुटतया इदमित्याकारेण कल्पितशून्यादिशरीरान्तमायीयप्रमातृपृथग्भावेन भासमानानां पदार्थानां भासनं शुद्धचिन्मयपरमार्थप्रमात्रा सहैक्यमनुज्झितवतामेवोपपद्यते नान्यथा, अर्थस्याप्रकाशतायां स्वीकृतायां नीलादिज्ञानस्यासंभवात्। यदि ह्यर्थेभ्यो भिन्न एव

ज्ञानात्मा प्रकाशस्तर्हि प्रकाशमात्ररूपत्वात्तस्य स्वात्मन्यभेद एव। यतो नीलस्य प्रकाशः ज्ञानं वेत्यत्र यो नीलांशः स ज्ञानस्य स्वरूपमिति न शक्यते वक्तुम्, भेदवादत्यागापत्तेः। अतश्च नीलज्ञानपीतज्ञानयोः पारस्परिको भेदो दुःसमर्थ्यः, तयोर्नीलपीतयोरप्रकाशात्मत्वात्। न च नीलेन जनितः, पीतेन जनितः, तेन वैकसामग्रीक इत्यादि शक्यते वक्तुम्, सिद्धे हि नीलपीतयोर्भेदे एवं वक्तुं शक्यत्वात्, स एव तु विचारास्पदीभूतः। न च नीलाकारं ज्ञानं पीताकारं वा ज्ञानं प्रतिबिम्बबलादिति वाच्यम्, ज्ञानाद्भिन्नस्य बिम्बस्यानवभासात्। अतोऽर्थस्य प्रकाशात्मत्वमवश्यमभ्युपेयम्।

न चार्थस्य प्रकाशरूपतायामभ्युपगतायां स सर्वान् प्रति सर्वदा भायादिति वाच्यम्, परिमितप्रमातारं प्रत्यर्थभानस्य माहेश्वरज्ञानशक्तिनिर्भरत्वात्। निपुणमिदं विवेचितमभिनवगुप्तपादैरीश्वरप्रत्यभिज्ञाविमर्शिन्यां विवृतिविमर्शिन्याञ्च ज्ञानाधिकार इति तत एवावधार्यम्, इह तु विस्तरभिया नोच्यते।

## भ्रान्तिविचारः

ननु प्रकाशमानत्वं सत्त्वमित्यभ्युपगमे पुरोवर्तमानायां शुक्तौ यो रजतावभासस्तस्यापि सत्त्वात् सत्यत्वं स्यादिति विगतः सत्यासत्यप्रविभाग इति चेच्छ्रूयताम्। भ्रान्तेः परिनिष्ठितं स्वरूपमद्वैतशैवनये। नासत्ख्यातिः, असाधारणख्यातिः, अनर्थक्रियाकारिताख्यातिः, विपरीतख्यातिः, अनिर्वचनीयख्यातिर्वा भ्रान्तिरद्वैतशैवनये, अपि तु पूर्णप्रथाभावादपूर्णख्यातिरूपाऽख्यातिरेव भ्रान्तिः। तथा हि—शुक्तौ पुरोवर्तमानायां यद् "इदं रजतं स्थिरं सर्वप्रमातृसाधारणमर्थक्रियायोग्यम्" इति ज्ञानं तत्रेदमंशे रजताद्यंशेषु तेषाञ्च सामानाधिकरण्येन योजनारूपे चांशे न तावत् काचन भ्रान्तिः, प्रकाशविमर्शयोरेव वस्तुस्वरूपव्यवस्थापकत्वात्। परन्त्विदमिह मनसि निधेयम्। भ्रमो द्विविधः, मानस ऐन्द्रियकश्च। पूर्वस्य शुक्तौ रजतमिति ज्ञानम्, अपरस्यैकस्मिंश्चन्द्रे चन्द्रद्वयप्रतीतिरुदाहरणम्। उभयत्र विषयतया गृहीतं यद् रजतं चन्द्रद्वयं वा तद् यावता पूर्णेन रूपेण उत्तरकालभाविसत्यविमर्शपर्यन्तम् 'इदं रजतम्' इति रूपेण ख्यातव्यम्, तावता रूपेण न ख्यातिरित्यपूर्णख्यातिरेव भ्रान्तितत्त्वम्।

अत्र 'इदं रजतम्' इति पूर्वविकल्पस्योत्तरकालभाविविमर्शेन 'नेदं रजतं वस्तु स्थिरं प्रमात्रन्तरगम्यमर्थक्रियाकारि' इति रूपेण विकल्पेन विमृश्यमानत्वाभावात् पूर्वस्योत्तरेण बाधः।

परन्तु बाधात् पूर्वं रजतस्य भासमानत्वाद् रजतज्ञानस्य सत्यत्वम्, अन्यथा रजतादानार्थं प्रवृत्तेरसंभवात्। न चात्र पृथक् पृथग् रजतांशे इदमंशे वा भ्रान्तिः, रजतं भातमिति ज्ञानस्याबाधितत्वात्। नहि बाधाकालेऽपि 'रजतं न भातम्' इति कस्यापि प्रतिपत्तिः, मानसे ज्ञाने रजतस्य भातत्वात्। इदमंशेऽपि न भ्रान्तिः, बाधसमयेऽपीदंपरामर्शस्य तदवस्थत्वात्। अत उत्तरकाले बाधात् प्रकाशमानत्वं सत्त्वमिति सिद्धान्तस्य न काचनापि क्षतिः। यतो भ्रान्तिर्न पृथक् पृथग्भासमानेष्विदन्ताद्यंशेषु, अपि तु 'इदम्' इति सर्वसाधारणस्य प्रमात्रन्तरगम्यस्याभासस्य 'रजतम्' इति मानसज्ञानरूपेण संस्कारोद्बोधरूपेणात एव प्रमात्रन्तरासाधारणेनाभासेन सह मेलनांशे। मेलनांशे यदेव 'इदम्' तदेव स्थिरत्वादिगुणयुक्तं 'रजतम्' इति समानाधिकरणतया स्थापनरूपे विमर्शानुवृत्तिनिर्मूलनं विमर्शोदयकालादारभ्यैव बाधकेन क्रियत इति तत्रैव भ्रान्तिभावः। एवं चाद्वैतशैवनये संबन्धनिष्ठो बाधः, न तु विषयनिष्ठः। अतोऽद्वैतशैवनये वेदान्तिनय इव भ्रान्तावभासमानस्य विषयस्य न स्वकारणेन सह सर्वथोच्छेदः, अपि तु मानसज्ञानरूपस्य संस्कारोद्बोधरूपस्य मनोग्राह्येन तादात्म्यसंबन्धमात्रस्य। एवं द्विचन्द्रज्ञाने ऐन्द्रियविकारभासितस्य 'द्वौ चन्द्रौ' इत्याभासस्य देशकालाभ्यामस्ति मेलनं यद् बाधकेन बाध्यते। प्रमात्रन्तरसाधारणत्वाभावस्य यदख्यानं तन्महिम्नैवासत्ता-वैपरीत्य-व्यपदेशौ युक्तावन्वयव्यतिरेकाभ्याम्। तदेव 'अन्यथा' इति 'व्यतिरेक' इति शब्दयोर्भ्रमविषये प्रयोगस्य मूलं कारणम्।

एवञ्च यः केशादेर्द्रष्टा तैमिरिकमात्मानं मन्यते तं प्रति केशादेर्नासत्त्वेन नापि विपरीतत्वेन व्यपदेशः। तेन हि प्रमात्रन्तरं प्रति न विषयः केशादिरिति निश्चितम्। यथा—ऐन्द्रजालिकं प्रत्यलीकरूपाणां मणिप्रभृतीनां नासत्त्वं नापि विपर्ययः कश्चित्, यतः स तेषां तात्त्विकं रूपं जानाति, अतोऽसत्त्वविपर्ययव्यवहारस्य व्यापिका प्रमात्रन्तरसाधारणत्वाभावस्याख्यातिरेव तद्व्यापकाभावे तद्व्यवहाराभाव इति निर्णयः।

एवमेव "मायापदं सर्वं भ्रान्तिः" इत्यभ्युपगच्छतामद्वैतशैवानां नेदं मतं यन्मोक्षे संसारस्य समूलकारणस्योच्छेदः, अपि तु परिमितप्रमातारं प्रतीदन्तया भासमानस्य भावजातस्य यो ज्ञातृज्ञेयभावरूपः संबन्धस्तस्यैव व्युच्छेदः, परिमितप्रमातुर्माया-विद्या-काल-कला-नियति-रागरूपे कञ्चुके धान्यात्विषीव पतिते परप्रमातृतादात्म्यादिदंभावरूपभेदबुद्ध्यसंभवात् सर्वस्याप्यहन्तातादात्म्यापत्तेः। यथाह—

इदं नीलमितीहाऽपि नामरूपे प्रथात्मके ।
न हेयेऽनयोर्हेया त्वहंभावाऽप्रथैव सा ॥ इति,
सर्वो ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रभवेऽपि महेशता ॥ इति च ।

## अद्वैतशैववेदान्तमतयोर्मौलिको भेदः

ब्रह्मणः स्वरूपलक्षणे उपात्तानां सच्चिदानन्दशब्दानामुभयमतानुसारमर्थविवेचनया तथा भ्रान्तिस्वरूपोपपादनेन वेदान्त्यद्वैतशैवयोः पारस्परिको भेदः संक्षेपेण प्रदर्शितः, अद्वैतशैवनये नास्तित्वमात्रं सत्त्वम् , अपि तु प्रकाशमानत्वम् । चित्त्वं न स्वप्रकाशमात्रत्वम् , अपि तु प्रत्यवमर्शात्मत्वम् । आनन्दश्च न दुःखाभावस्वरूपः, अपि तु स्वात्मविश्रान्तिरूप इति । इमे सर्वेऽपि भेदा मौलिकभेदादुद्भवन्ति ।

स चायम् :—

वेदान्तिनये माया सदसद्भ्यामनिर्वचनीया, न च भजते ब्रह्मतादात्म्यम् । अद्वैतशैवनये तु माया परमशिवाभिन्नतत्तादात्म्यावस्थितशक्तिपरमार्था, शक्तिशक्तिमतोस्तादात्म्याभ्युपगमात् । यथाह—

न शिवः शक्तिरहितो न शक्तिः शिववर्जिता ।
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव ॥ इति ।

मायाऽपरपर्यायाया अविद्याया ब्रह्मशक्तिरूपत्वं तु वैयाकरणसिद्धान्तेऽपि स्वीक्रियत इति प्रागुपपादितम् । अतो वैयाकरणाद्वैतशैवयोरस्मिन् विषये सर्वथैकमत्यम् ।

मायायाः परतत्त्वशक्तित्वस्वीकारांश एवाद्वैतशैववेदान्तिनोर्मौलिको मतभेद इति स्पष्टमेवोक्तमभिनवगुप्तपादैः स्वीयेश्वरप्रत्यभिज्ञाविवृत्युपसंहारे । यथाह—

"ब्रह्मवादेऽविद्यां मायाशक्तीकृत्य विज्ञानाद्वयमात्मेश्वराभिप्रायेण निरूप्य सिध्यत्येव जनः" इति ।

## उपसंहारः

विस्तरभिया ज्ञानस्मृत्यपोहनशक्तिमन्महेश्वरानभ्युपगमे न सिध्यति कश्चन ज्ञानस्मरणादिनिर्भरो लौकिकोऽपि व्यवहार इत्यादि महत्त्वपूर्णानप्येतद्विषयान्तर्गतान् विषयानस्पृशन्, लब्धेऽ-

न्यस्मिन्नवसरे तत्प्रतिपादनं चिकीर्षन्, समयाभावात् प्रतिपिपादयिषिते अपि क्रमकुलदर्शने अप्रतिपादयन्, अस्य व्याख्यानत्रयस्य शैवदर्शनसंग्रहरूपतां परिरिरक्षिषुः परिशिष्टरूपेण तद्दर्शनद्वयविवरणं दित्सन्, सावधानमिमानि भाषणानि शृण्वद्भ्यो विद्वच्छ्रोतृभ्यः शतशो धन्यवादान् ददत्, विरमाम्युच्चारयन्नेतत्सिद्धान्तसंक्षेपरूपं पद्यद्वयम्—

स्वेच्छावभासिताशेषलोकयात्रात्मने नमः ।
शिवाय शश्वदच्छन्नस्वच्छस्वातन्त्र्यमूर्तये ॥
यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥

॥ इति शम् ॥



# वाराणसेयसंस्कृतविश्वविद्यालयेन प्रकाशिता ग्रन्थाः

## सरस्वतीभवन-ग्रन्थमालायाम्

| | |
|---|---|
| ८६. गर्गसंहिता ( प्रथमो भागः ) श्रीविभूतिभूषणभट्टाचार्येण सम्पादिता । | १०.०० |
| ८७. बृहच्छब्देन्दुशेखरः ( व्याकरणम् ) नागेशभट्टविरचितः ( १-३ भागाः ) । डॉ० सीतारामशास्त्रिणा सम्पादितः । | ४५.०० |
| ८८. पदवाक्यरत्नाकरः ( व्याकरणम् ) गोकुलनाथोपाध्यायविरचितः, यदुनाथमिश्रविरचितटीकया सहितः । पण्डितनन्दिनाथमिश्रेण सम्पादितः । | १५.०० |
| ८९. काव्यप्रकाशविवरणम् ( अलङ्कारः ) गोकुलनाथोपाध्यायविरचितः । कविशेखरबदरीनाथझासम्पादितः । | ८.०० |
| ९०. तारिणीपारिजातः ( तन्त्रम् ) विद्वदुपाध्यायविरचितः । पण्डितरमानाथझाशर्मणा सम्पादितः । | ८.००<br>४.०० |
| ९१. वाक्यपदीयं ब्रह्मकाण्डम् ( व्याकरणम् ) भर्तृहरिप्रणीतं स्वोपज्ञवृत्तियुतम्, श्रीरघुनाथशर्मणा विरचितया अम्बाकर्त्रीव्याख्यया संवलितम् । | १०.०० |
| ९२. सूक्तिमुक्तावली ( गद्यकाव्यम् ) गोकुलनाथोपाध्यायविरचिता । पण्डितभूपनारायणझाशर्मणा सम्पादिता । | ७.५० |
| ७. योगिनीहृदयम् ( तन्त्रम् ) अमृतानन्दनाथविरचितया दीपिकया भास्कररायविरचितेन सेतुबन्धेन च सहितम् । ( द्वितीयं संस्करणम् ) | १०.०० |
| ३२. तन्त्ररत्नम् ( मीमांसा ) ( तृतीयो भागः ) पार्थसारथिमिश्रविरचितम् । श्री टी० रामचन्द्रदीक्षितेन सम्पादितम् । | ५.५० |

### मुद्रणालयस्था ग्रन्थाः

१. काव्यप्रकाशदीपिका ( तृतीयो भागः ) चण्डीदासविरचिता

२. त्रिपुरारहस्यम् ( तन्त्रम् ) ( ज्ञानखण्डः ) श्रीनिवासभट्टविरचितया तात्पर्यदीपिकाव्याख्यया सहितम् । ( द्वितीयं संस्करणम् )

३. पारसीकप्रकाशः ( कोशः ) विहारिमिश्रविरचितः ।

४. हयत ( सिद्धान्तज्यौतिषम् ) ।

५. वाक्यपदीयं द्वितीयं काण्डम् ( व्याकरणम् ) यावदुपलब्धभर्तृहरिप्रणीतस्वोपज्ञ-वृत्त्या, पुण्यराजकृतटीकया, श्रीरघुनाथशर्मविरचित-अम्बाकर्त्रीव्याख्यया च सहितम् ।

## सरस्वतीभवन-निबन्धमालायाम्

### मुद्रणालयस्थौ

१. व्याकरणदर्शनपीठिका—श्रीरामाज्ञापाण्डेयेन विरचिता ।

२. व्याकरणदर्शनवेदिका—श्रीरामाज्ञापाण्डेयेन विरचिता ।

## लघुग्रन्थमालायाम्

१. गैरिकसूत्राणि सवृत्तिकानि जड्युपनामकगङ्गारामोन्नीतानि, श्रीरघुनाथशर्मविरचितविवरणसमेतानि । श्रीव्रजवल्लभद्विवेदेन प्रस्तावना पाठभेदादिभिः संयोज्य संपादितानि । १.००

२. अष्टादशपुराणव्यवस्था काशीनाथभट्टविरचिता । श्रीमुरलीधरमिश्रेण व्याकरणविभागाध्यक्षेण संपादिता । १.००

३. भङ्गीविभङ्गीकरणम् ( ज्यौतिषम् ) श्रीरङ्गनाथभट्टविरचितम् । संपादकः—श्रीमीठालाल ओझा, ज्यौतिषाचार्यः । २.००

४. प्रमाणविनोदः ( नव्यन्यायः ) श्रीचित्रधरमिश्रविरचितः । श्रीढुण्ढिराजशास्त्रिणा संपादितः । १.५०

५. गलितप्रदीपः ( वेदः ) लक्ष्मीधरसूरिविरचितः । श्रीश्रीकृष्णदेवशर्मणा ऋग्वेदाचार्येण संपादितः । २.००

६. लोहगोलखण्डनं रङ्गनाथदैवज्ञविरचितम् , तथा लोहगोलसमर्थनं गदाधरदैवज्ञविरचितम् ( ज्यौतिषम् ) । सम्पादकः—श्रीमीठालाल ओझा ज्यौतिषाचार्यः । २.००

७. कोविदानन्दः ( व्याकरणम् ) आशाधरभट्टविरचितः । श्रीकालिकाप्रसादशुक्लेन संपादितः । १.५०

## हस्तलिखितग्रन्थानां विवरणात्मिका सूची

| | |
|---|---|
| प्रथमः खण्डः, प्रथमो भागः ( वेदः ) | ३.२५ |
| प्रथमः खण्डः, द्वितीयो भागः ( उपनिषद् ) | २.०६ |
| द्वितीयः खण्डः प्रथमो भागः ( कर्मकाण्डम् ) | २.५० |
| द्वितीयः खण्डः, द्वितीयो भागः ( कर्मकाण्डम् ) | २.०० |
| तृतीयः खण्डः ( धर्मशास्त्रम् ) | ४.३१ |
| चतुर्थः खण्डः ( पुराणेतिहासो गीता च ) | ६.२५ |
| पञ्चमः खण्डः, प्रथमो भागः ( स्तोत्रम् ) | ७.२५ |
| पञ्चमः खण्डः, द्वितीयो भागः ( स्तोत्रम् ) | ७.२५ |
| षष्ठः खण्डः ( तन्त्रम् ) | ६.०० |
| सप्तमः खण्डः ( पूर्वोत्तरमीमांसे सांख्ययोगौ च ) | ७.०० |
| अष्टमः खण्डः ( न्यायवैशेषिकम् ) | ८.५० |
| नवमः खण्डः ( ज्यौतिषम् ) | ७.५० |

## गङ्गानाथझा-ग्रन्थमालायाम्

१. न्यायकन्दली ( वैशेषिकदर्शनम् ) भट्टश्रीधरविरचिता प्रशस्तपादभाष्यटीका, प्रशस्तपादभाष्येण सहिता । श्रीदुर्गाधरझाशर्मणा हिन्दीभाषानुवादेन सह सम्पादिता । २५.००

२. न्यायसिद्धाञ्जनम् ( विशिष्टाद्वैतम् ) वेदान्तदेशिकविरचितम् । श्रीनीलमेघाचार्येण हिन्दीभाषयानूद्य सम्पादितम् । यन्त्रस्थम्

## गङ्गानाथझा-प्रवचनमालायाम्

१. वेदविज्ञानबिन्दुः ( वेदः ) म० म० गिरिधरशर्मचतुर्वेदविरचितः । १.००

२. बौद्धदर्शनबिन्दुः ( बौद्धदर्शनम् ) डॉ० सातकडिमुखोपाध्यायविरचितः । यन्त्रस्थः

३. शैवदर्शनसंग्रहः ( शैवदर्शनम् ) डॉ० कान्तिचन्द्रपाण्डेयविरचितः । यन्त्रस्थः

## सम्पूर्णानन्द-ग्रन्थमालायाम्

१. दृक्सिद्धपञ्चाङ्गनिर्माणपद्धतिः ( ज्यौतिषम् ) श्रीगणपतिदेवशास्त्रिणा विरचिता, तेनैव संपादिता च । ६.००

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतक्षेत्रेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य विदुषां मौलिकविचारपूर्णा अनुसंधानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः ।

६. अस्य वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते ।

७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेयसंस्कृतविश्वविद्यालय, वाराणसी–२" इति संकेतेन विधेयः ।

---

प्रकाशक—श्री क्षेत्रेशचन्द्रचट्टोपाध्याय, संचालक—अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी ।

मुद्रक—श्री बलदेवदास, संसार प्रेस, संसार लिमिटेड, वाराणसी ।